उपाध्यायश्रीविनयविजयाराधिते

# हैमलघुप्रक्रिया ।



पेथापुरनिवासिकालिदासात्मज-
सकरचन्द्रश्रेष्ठिद्रव्यसाहाय्येन

भावनगरस्थश्रीजैनधर्मप्रसारकसंसदध्यक्षेण
श्रेष्ठि श्रीकुंवरजी-आणंदजीत्यनेन



मुम्बापुर्यां
निर्णयसागरयन्त्रालये मुद्रापिता

संवत् १९७४. वीर संवत् २४४५. सने १९१८.

प्रथमावृत्तेः

# मुखवेदिका



इह तावत् सर्वे जनाः प्रयोजनमुद्दिश्य कार्यविशेषे प्रवर्तन्ते । प्रयोजनं हि मुख्यगौणभेदेन द्विविधं । तत्रैहिकं गौणप्रयोजनं दुःखसंभिन्नत्वादल्पत्वादसारत्वाच्च नात्यादरणीयं । आमुष्मिकं मुख्यप्रयोजनं तु निःश्रेयसशब्दवाच्यं दुःखासंभिन्नत्वादनल्पत्वात्सारत्वाच्च सर्वैरापामरमादरणीयमेव । तच्च न किल द्रव्यादिना लभ्यं अपितु ज्ञानेनैव । तत् ज्ञानं तु ग्रन्थस्थितत्वेन शब्दस्वरूपं । अतस्तच्छुद्धियुक्तं चेत्तदा सफलं । सा शुद्धिर्व्याकरणसाध्या एव अतो व्याकरणशास्त्रमावश्यकारम्भम् ।

इह कालमाहात्म्यात् प्रमादाच्च जैनानां स्वकीयव्याकरणशास्त्रसंपत्तिर्गुप्ता विनष्टप्राया चासीत् । केचिदन्यमतावलम्बिनो न केवलं जैना अपि केचित् "जैनदर्शने सरलं व्याकरणशास्त्रं नास्तीति वदन्ति स्म" । परं संप्रति जनानां ज्ञानरुचित्वेन विहरणशीलानां विद्वत्साधूनां समुपदेशाद्गृहनिक्षिप्तानां पुरातनग्रन्थानां शोधने जैनानां स्वकी-

यव्याकरणशास्त्रसंपत्तिः प्रकाशं समागता । तत्र तावच्छ्रीमद्धेमचन्द्राचार्यैर्जैनेन्द्रव्याकरणानुसारेण "सिद्धहेमशब्दानुशासनं" नाम महाव्याकरणं समारचितं । तस्याष्टादशसहस्रश्लोकमिता बृहद्वृत्तिः, षट्सहस्रश्लोकमिता लघुवृत्तिरिति द्वे वृत्ती सिद्धहेमचन्द्राख्यया प्रसिद्धे स्तः।

तदुपरि न्यास इत्याख्याऽशीतिसहस्रश्लोकमिता भाष्यभूता महती टीकाऽस्ति । तस्यैव शब्दानुशासनस्य मूलसूत्रमयी अष्टाध्यायी सङ्कलिताऽस्ति, तस्या अष्टमाध्याये प्राकृतभाषाव्याकरणमार्षत्वेन निबद्धं वर्तते । अष्टाध्यायीक्रमस्थसूत्राणामुपरि केनचित् जैनाचार्येण ढुण्ढिकानाम्नी टीका रचिताऽस्ति । धातुबोधार्थं धातुपारायणं, कृत्प्रत्ययबोधार्थं उणादिगणसूत्रविवरणं श्रीहेमचन्द्राचार्यविरचितं पाठकानामत्युपकारकमपि वर्तते। तथा श्रीगुणरत्नसूरिभिः क्रियारत्नसमुच्चयनामा ग्रन्थः सङ्कलितस्तदपरेऽपि व्याकरणग्रन्था विविधाचार्यरचिता दरीदृश्यन्ते ।

श्रीमन्मेघविजयोपाध्यायैस्त्रीणि शब्दानुशासनगतसूत्रानुसारीणि व्याकरणानि रचितानि सन्ति । तत्र प्रथमं "चान्द्र" इत्याख्यं षट्सहस्रश्लोकमितं। द्वितीयं "मध्यव्याकरणं" पञ्चत्रिंशच्छतश्लोकमितं । तृतीयं "लघुव्याकरणं" षट्शतश्लोकमितं।

तत्र मध्यव्याकरणं लघुव्याकरणं च प्रायो दुष्प्रापं वर्तते ।

इदं हैमलघुप्रक्रियाख्यं व्याकरणं शब्दानुशासनसूत्रानुसारेण श्रीविनयविजयोपाध्यायै रचितमस्ति, तदुपरि चतुस्त्रिंशत्सहस्रश्लोकमिता स्वोपज्ञटीकास्ति । एतद्ग्रन्थकर्तारः श्रीविनयविजयगणिनः श्रीमहोपाध्यायपदभाजोऽतिविद्वांस आसन्। ते कस्मिन् देशे समुद्भूता इति निर्णेतुं न शक्यते परं प्रायस्तेषां गुर्जरेषु विहारः संभाव्यते । तेषां गुरवः श्रीकीर्तिविजयगणिनस्तद्गुरवः श्रीमदकब्बरपातसाहिपूज्याः श्रीहीरविजयसूरयो विविधग्रन्थकर्तार आसन् । इदानीमपि तेषां कीर्तिकौमुदी भारताम्बरे प्रकाशते । महोपाध्यायश्रीविनयविजयसूरयस्तपागच्छीया उपकेशवंशोद्भवाश्चासन् । तेषां निर्वाणकालस्तु श्रीविक्रमार्कसमयाद्वेदाग्निमुनिचन्द्र ( १७३४ ) मिते वर्षेऽभूत् । एभिरनेके ग्रन्था जैनमतोपयोगिनः समारचिताः । तत्र लोकप्रकाशः, शान्तसुधारसः ( गेयमयः ), नयकर्णिका, सुबोधिका कल्पवृत्तिः ( कल्पसूत्रटीका ) इत्यादयोऽद्यापि प्रसिद्धाः प्रवर्तन्ते ।

एतद्व्याकरणं व्युत्पित्सूनां सुखबोधकमनतिविस्तरं चास्ति । तस्य सङ्कलनायां प्रथमं संज्ञाधिकारो मूलसूत्रसहितकारिकाभिरेव प्रतिपादितः, सन्धि-

विचारोऽपि सुगमत्वेन विशदीकृतस्तथा षड्लिङ्गगतानां शब्दानामकाराद्यनुक्रमेणैव सर्वः क्रमः साधितः, अव्ययादितद्धितान्तानां प्रकरणानां तथा चोत्तरार्धे धातुकृत्प्रत्ययानां यादृशी क्रमरचना रचिताऽस्ति तादृशी न क्वापि व्याकरणान्तरे दृश्यते ।

एवं सर्वतः संस्कृतपाठकानामत्युपयोगकारि शास्त्रोपकारकं चेदं व्याकरणं विज्ञाय श्रीमन्महामुनिश्रीवृद्धिचन्द्रगुरुप्रेरणयाऽस्माभिर्मुद्राप्य प्रकाशितं । आशास्महे व्युत्सिसूनां सर्वेषामत्र प्रवृत्तिः साधीयसी स्यादिति । महता यत्नेन ग्रन्थोऽयं अस्मदीयशास्त्रिनर्मदाशंकरशर्मणा परिशोधितस्तथापि यद्यत्र किञ्चित् स्खलितं सुधीभिर्लक्ष्येत तत्परिशोधनीयम् । एतद्ग्रन्थस्य शुद्धिपत्रमपि सङ्कलितं तदवलोकनीयं पाठकैरिति सानुनयं प्रार्थयामहे वयम् ।

संवत् १९४९ श्रावण. | श्रीजैनधर्मप्रसारकसभा, भावनगर.

## लक्षयन्तु लक्षणवन्तो लक्षणशास्त्रद-त्तलक्ष्याः ।

अस्मिन्ननन्यसाधारणे जिनशासने तर्कव्याकरणकाव्यादीनि सर्वशास्त्राणि विशिष्टज्ञानकारणानीत्यतो व्याकरणग्रन्था महावैयाकरणग्रथिता मुद्रिता अमुद्रिताश्च दरीदृश्यन्ते, तेषामेकतमोऽयं ग्रन्थोऽध्येतृणामुपकाराय पूर्वमस्माभिर्मुद्रापित आसीत्, परंतु लघीयसैव कालेनास्य प्रतयो रिक्तीभूताः, प्रार्थयितारश्चानेकशो मार्गयन्तो विफलप्रार्थनावत्त्वेन विषण्णा आसते, अतोऽस्माभिः पठनानुकूल्यं विधित्सुभिः पेथापुरवासि कालिदासात्मजसकरचन्द्र श्रेष्ठिनः सम्प्रत्यमदावाद-निवासिनो द्रव्यसाहाय्येनायं मुद्रापितः । ग्रन्थस्यास्यैतत्प्रणेतुश्च माहात्म्यं प्रथमावृत्तिप्रस्तावनायां लिखितप्रायत्वात्सुप्रसिद्धत्वाच्च न प्रतन्यते । अधीत्येममध्येतार आत्महिते प्रवर्तन्तामित्याशास्महे । शुद्धिविषये चास्य प्रथमावृत्तितोऽधिकतरे प्रयत्ने कृतेऽपि दृष्टिदोषादिना कारणेन स्खलितानि भवेयुश्चेत्तज्ज्ञातारः शोधयेयुरिति प्रार्थ्यते. इति ॥

संवत् १९७४ चैत्र. } श्रीजैनधर्मप्रसारकसभा, भावनगर.

# अथ हैमलघुप्रक्रियाख्यं व्याकरणम् ।

## संज्ञाधिकारः ॥

॥ श्रीजिनाय नमः ॥



प्रणम्य परमात्मानं वालानां वोधसिद्धये ॥
करोमि प्रक्रियां सिद्धहेमचन्द्रानुसारिणीम् ॥१॥
ॐनमो हेमचन्द्राय हैमव्याकरणाय च ॥
शब्दपाथोधिसोमाय जगद्विख्यातकीर्तये ॥२॥
आदौ विघ्नविघाताय शिष्टाचाराच्च शास्त्रकृत् ॥
परमेष्ठिनमस्कारं कुरुते भावमङ्गलम् ॥ ३ ॥

### अर्हम् ॥ १ ॥

अर्हमित्यक्षरं ध्येयं परमेश्वरवाचकम् ॥
शास्त्रादौ पठतां क्षेमव्युत्पत्त्यभ्युदयप्रदम् ॥४॥

### सिद्धिः स्याद्वादात् ॥ २ ॥

शब्दानां ज्ञप्तिनिष्पत्ती स्यातां स्याद्वाददर्शने ॥
शब्दे ह्येकान्ततो नित्येऽनित्ये वा तद्द्वयं कुतः ॥५
तत्रादौ व्यवहाराय संज्ञां दिशति शास्त्रकृत् ॥

## औदन्ताः स्वराः ॥ ३ ॥

औकारान्ता अकाराद्याः स्वरा वर्णाश्चतुर्दश ॥६
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ १४

## एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥ ४ ॥

मात्रा कालविशेषः।
एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥
प्लुतः स्वरस्त्रिमात्रः स्याद्व्यञ्जनं चार्धमात्रकम् ॥७
अ इ उ ऋ ऌ इति ह्रस्वाः। आ ई ऊ ॠ ॡ ए ऐ ओ औ इति दीर्घाः। आ ३ ई ३ इत्यादिप्लुताः।
दूरादामन्त्रणे प्रश्ने प्रश्नाख्याने च भर्त्सने ॥
संमत्यसूयाकोपादौ यथायोगं स्वराः प्लुताः॥ ८ ॥
स चैकैकस्त्रिधोदात्तोऽनुदात्तः स्वरितोऽपि च ॥
षोढा च सानुनासिकनिरनुनासिका इति ॥ ९ ॥
उच्चैर्नीचैः समवृत्त्योच्चार्यमाणाः स्वराः क्रमात् ॥
उदात्ताश्चानुदात्ताश्च स्वरिताश्च भवन्त्यमी ॥१०
मुखनासोच्चार्यमाणो वर्णः स्यात्सानुनासिकः ॥
मुखेनैवोच्चार्यमाणः ख्यातो निरनुनासिकः ॥११
प्रत्येकमित्यवर्णाद्याः पञ्चाष्टादशधा स्मृताः ॥
सन्ध्यक्षरं द्वादशधा ह्रस्वपञ्चेदवर्जितम् ॥ १२ ॥
दीर्घपञ्चेदवर्जितऌकारोपि द्वादशधेति पाणिनीयाः।

## अनवर्णा नामी ॥ ५ ॥

अवर्णवर्जिताश्चैते स्वरा द्वादश नामिनः ॥

## लृदन्ताः समानाः ॥ ६ ॥

लृकारान्ता अकाराद्याः समानाख्याः स्वरा दश १३

## ए ऐ ओ औ सन्ध्यक्षरम् ॥ ७ ॥

सन्ध्यक्षराख्याश्चत्वार ए ऐ ओ औ इमे स्वराः ॥

## अं अः अनुस्वारविसर्गौ ॥ ८ ॥

अकारावेतयोर्मध्ये सुखोच्चारणहेतुकौ ॥ १४ ॥

## कादिर्व्यञ्जनम् ॥ ९ ॥

व्यञ्जनाख्यास्त्रयस्त्रिंशद्वर्णा हान्ताश्च कादयः ॥
कखगघङ १ चछजझञ २ टठडढण ३ तथदधन ४
पफबभम ५ यरलवशषसह ।

## पञ्चको वर्गः ॥ १० ॥

मान्तेषु कादिवर्णेषु कचटतपसंज्ञकाः ॥ १५ ॥
पञ्चभिः पञ्चभिर्वर्णैर्वर्गाः पञ्च प्रकीर्तिताः ॥

## अपञ्चमान्तस्थो धुट् ॥ ११ ॥

अवर्गपञ्चमान्तस्थास्ते चतुर्विंशतिर्धुटः ॥ १६ ॥
क ख ग घ । च छ ज झ । ट ठ ड ढ । त थ द
ध । प फ ब भ । श ष स ह ॥

## आद्यद्वितीयशषसा अघोषाः ॥ १२ ॥

आद्यद्वितीया वर्गाणामघोषाः शषसा अपि ॥

## अन्यो घोषवान् ॥ १३ ॥

अन्ये स्युर्गादयो वर्णा घोषवन्तश्च विंशतिः १७
ग घ ङ । ज झ ञ । ड ढ ण । द ध न । ब भ
म । य र ल व ह । यरलवा अन्तस्थाः ।

## अं अः ×क×प शषसाः शिट् ॥ १४ ॥

शिट्संज्ञका अमी सप्त तत्र ×कः कुलिशाकृतिः॥
गजकुम्भाकृतिः ×पश्च कपावुच्चारणार्थकौ ॥१८॥

## तुल्यस्थानास्यप्रयत्नः स्वः ॥ १५ ॥

आस्यप्रयत्नस्थानाभ्यां तुल्या वर्णाः स्वसंज्ञकाः॥
चतुर्दशानां स्वराणां स्वस्वभेदा यथा मिथः॥१९
पञ्चपञ्चैकवर्गस्था वर्णाः स्वाः स्युः परस्परम् ॥
यलवाः सानुनासिकनिरनुनासिका अपि ॥२०॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ॥
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च॥२१
विसर्गोऽधाकुहाः कण्ठ्यास्तालव्या इचुयाश्च शः
उपूपध्मानीया ओष्ठ्या मूर्धन्या ऋटुपाश्च रः २२
दन्त्या लृतुलसा ए ऐ कण्ठतालुसमुद्भवौ ॥
ओ औ कण्ठोष्ठजौ ज्ञेयौ वो दन्तौष्ठ्यः प्रकीर्तितः ॥ २३ ॥
जिह्वयश्च जिह्वामूलीयोऽनुस्वारो नासिकोद्भवः॥
स्वस्थाननासिकास्थानाः स्युर्ङञणनमा इति २४

स्यादुरस्यो हकारस्तु सहान्तस्थः सपञ्चमः ॥
आस्यप्रयत्नाः संवारविवारस्पृष्टतादयः ॥ २५ ॥
उक्ते वर्णे स्वसंज्ञोऽपि ग्राह्यः कारे च केवलः ॥
संयोगः स्याद्व्यञ्जनानि स्वराव्यवहितान्यहो ॥२६

## अप्रयोगीत् ॥ १६ ॥

वर्णो वर्णसमूहो वा पाठे समुपलभ्यते ॥
न दृश्यते प्रयोगे यः स इत्संज्ञक इष्यते ॥२७॥
स्यादिस्त्यादिर्विभक्तिः स्याद्विभक्त्यन्तं भवेत्पदम्
आदेशः शत्रुवज्ज्ञेयो भवेन्मित्रवदागमः ॥२८॥
अवसानं विरामः स्याद्वर्णानुच्चारणं पुरः ॥
त्रयो लुक् लुप् च लोपश्च वर्णादर्शनवाचकाः॥२९
दीर्घो विसर्गानुस्वारयुक् संयोगपरो गुरुः ॥
असंयोगपरो ह्रस्वो विसर्गाद्युज्झितो लघुः॥३०॥
अरेदोतो गुणसंज्ञा ऋइउस्थानभाविनः ॥
वृद्धिसंज्ञाः स्मृता आ आर् ऐदौच्च स्वरसंभवाः ३१
स्यमौजसः स्युर्घुट्संज्ञाः पुंस्त्रियोः शिर्नपुंसके ॥
विना संबोधनार्थं सिं शेषघुट्संज्ञका अमी॥३२

## लोकात् ॥ १७ ॥

यदत्र संज्ञान्यायादि वर्णाम्नायादि नोदितम् ॥
तद्वैयाकरणादिभ्यो लोकेभ्यो बुध्यतां बुधैः ३३
इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयवि-
जयगणिविरचितायां हैमलघुप्रक्रियायां संज्ञाधिकारः समाप्तः ॥

१ "आस्यप्रयत्ना स्पृष्टाद्या विवाराद्यास्तु बाह्यकाः" इत्यपि पाठः क्वचिद् दृश्यते ।

## अथ स्वरसन्धिरभिधीयते ॥

वृषभ-अजितौ इति स्थिते—

### समानानां तेन दीर्घः ॥ १ ॥

समानानां तेन परेण समानेन सह दीर्घः स्यात् । द्वयोः स्थाने एको दीर्घः स्यादिति सहार्थः । लोकात्, स्वरहीनं परेण संयोज्यम् । वृषभाजितौ । तव-आयुः तवायुः । दधि-इदं दधीदम् । मधु-उदकं मधूदकम् । पितृ-ऋषभः पितृषभः । होतृ-ऋकारः होतॄकारः ।

### अवर्णस्येवर्णादिनैदोदरल् ॥ २ ॥

अवर्णस्य इवर्णउवर्णऋवर्णऌवर्णैः सह एत् ओत् अर् अल् इत्येते आदेशाः स्युः ।

( यथासंख्यमनुदेशः समसंख्यानाम् )

तव-इदं तवेदम् । गङ्गा-उदकं गङ्गोदकम् । महा-ऋषिः ।

( जलतुम्बिकान्यायेन रेफस्योर्ध्वगमनम् )

महर्षिः । तव-ऌकारः तवल्कारः ।

### ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् ॥ ३ ॥

प्रादीनां सप्तानामवर्णस्य ऋणे परे ऋता सहार् स्यात् । प्र-ऋणं प्रार्णम् । ऋण-ऋणं ऋणार्णम् ।

## ऋते तृतीयासमासे ॥ ४ ॥

अवर्णस्य ऋते परे तृतीयासमासे ऋता सहार् स्यात् । शीत-ऋतः शीतार्तः । इत्यादि ।

## ऐदौत्सन्ध्यक्षरैः ॥ ५ ॥

अवर्णस्य सन्ध्यक्षरैः परैः सह ऐऔ स्याताम् । तव एषा तवैषा । महा-ऐश्वर्यं महैश्वर्यम् । तव-ओदनः तवौदनः । तव-औपगवः तवौपगवः ।

## वौष्ठौतौ समासे ॥ ६ ॥

ओष्ठौत्वोः परयोः समासेऽवर्णस्य लुग्वा स्यात् । बिम्बोष्ठी । बिम्बौष्ठी । स्थूलोतुः । स्थूलौतुः ।

(क्वचिदन्यत्राप्येदोतो परयोरवर्णस्य लुग्वाच्यः॰)

अद्य-ओम् अद्योम् । इह-एव तिष्ठ इहेव तिष्ठ ।

(क्वचिदवर्णस्येवर्णोवर्णाभ्यां सहैत्वौत्वे वाच्ये॰)

स्व-ईरः स्वैरः । स्व-ईरिणी स्वैरिणी । अक्ष ऊहिनी अक्षौहिणी । प्र-ऊढः प्रौढः । दधि अत्र इति स्थिते ।

## इवर्णादेरस्वे स्वरे यवरलम् ॥ ७ ॥

इउऋऌवर्णानामस्वे स्वरे परे यवरलाः स्युः । दध् य् अत्र इति तावद्भवति ।

## अदीर्घाद्विरामैकव्यञ्जने ॥ ८ ॥

अदीर्घात्स्वरात्परस्य रहस्वरवर्जस्य वर्णस्य वि-

रामे असंयुक्तव्यञ्जने च परेऽनु द्वित्वं वा स्यात्। इति धस्य वा द्वित्वम्।

## तृतीयस्तृतीयचतुर्थे ॥ ९ ॥

तृतीये चतुर्थे च परे धुटस्तृतीयः स्यात्। एकवर्गीया मिथः स्वा इति पूर्वधकारस्य दकारः। दद्ध्यत्र। दध्यत्र। मधु-अत्र मद्ध्वत्र। मध्वत्र। पितृ-अर्थः पित्र्र्थः। पित्रर्थः। लृ-इत् लित्। इवर्णादेरित्यत्र पञ्चमीव्याख्याने दधियत्र, मधुवत्रेत्यादि। गौरी-अत्रेत्यत्र गौर् य् अत्रेति जाते अदीर्घाद्विरामेति सूत्राप्राप्तेन रेफस्य द्वित्वम्, किन्तु

## ह्रोदर्हस्वरस्यानु नवा ॥ १० ॥

स्वरात्पराभ्यां रहाभ्यां परस्य रहस्वरवर्जस्य वर्णस्यानु द्वित्वं वा स्यादिति यकारस्य वा द्वित्वम्। गौर्य्यत्र। गौर्यत्र। नहि-अत्र नह्य्यत्र। नह्यत्र।

## एदैतोऽयाय् ॥ ११ ॥

एकारैकारयोः स्वरे परे अयायौ स्याताम्। ने-अनं नयनम्। नै-अकः नायकः।

## ओदौतोऽवाव् ॥ १२ ॥

ओकारौकारयोः स्वरे परे अवावौ स्याताम्। लो-अनं लवनम्। लौ-अकः लावकः।

( पदान्तेऽयायावावा य्वो. स्वरे परे लुग्वा वाच्या इति सप्तमसन्धिप्रकरणे )

ते-आगताः त आगताः । तयागताः । तस्मै-इदं तस्मा इदं । तस्मायिदं । पटो-इह पट इह । पटविह । वृक्षौ-इह वृक्षा इह । वृक्षाविह ।

## स्वरे वाऽनक्षे ॥ १३ ॥

गोशब्दसम्बन्धिन ओकारस्याक्षशब्दवर्जस्वरे परे अव इत्यकारान्त आदेशो वा स्यात् । गो-ईशः गवेशः । गवीशः ।

( इन्द्रे परे सज्ञाया च नित्यम्‌# )

गवेन्द्रः । गवाक्षः ।

## एदोतः पदान्तेऽस्य लुक् ॥ १४ ॥

पदान्तस्थाभ्यामेदोद्भ्यां परस्याकारस्य लुक् स्यात् । तेऽत्र । पटोऽत्र । पदान्त इत्येव । ने-अनं नयनम् ।

इति महोपाध्यायश्रीकीर्तिविनयगणिशिष्योपाध्यायश्रीविनयविनयगणिविरचिताया हैमलघुप्रक्रियाया स्वरसधि समाप्त ।

---

## अथासन्धिरुच्यते ॥

## प्लुतोऽनितौ ॥ १ ॥

इतिवर्जे स्वरे परे प्लुतः सन्धिभाग् न स्यात् । चैत्र ३ अत्र न्वसि । इतौ तु । सुश्लोकेति ।

## इ ३ वा ॥ २ ॥

इः प्लुतः सन्धिं वा नैति । लुनीहि ३ इति लुनीहीति ।

## ईदूदेद्द्विवचनम् ॥ ३ ॥

एते त्रयो द्विवचनान्ताः सन्धिं नाप्नुवन्ति। मुनी इह। साधू एतौ। माले इमे। पचेते इति।

## अदो मुमी ॥ ४ ॥

अदस्शब्दसंबन्धिनौ मुमी सन्धिं नाप्नुतः। अमुमुईचा। अमी अश्वाः।

## चादिः स्वरोऽनाङ् ॥ ५ ॥

आङ्वर्जश्चादिः स्वरः सन्धिं नैति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवम्। अनाङिति किम्। आ-इहि एहि।

## ओदन्तः ॥ ६ ॥

ओदन्तश्चादिःस्वरे सन्धिं न भजते। अहो अत्र।

## सौ न वेतौ ॥ ७ ॥

सिनिमित्त ओकार इतौ परे सन्धिं वा नैति। पटो-इति पटविति।

## वाऽत्यसन्धिः ॥ ८ ॥

गोरोकारस्यावति परेऽसन्धिर्वा स्यात्। गो-अग्रम् गवाग्रम्। गोऽग्रम्।

## ऋलृति ह्रस्वो वा ॥ ९ ॥

ऋति लृति च परे समानानां ह्रस्वो वा स्यात्।

ह्रस्वविधानसामर्थ्यादसन्धिः । इदमेव ह्रस्वस्यापि ह्रस्वविधाने फलम् । बाल ऋश्यः । बालर्श्यः ॥

## ह्रस्वोऽपदे वा ॥ १० ॥

इवर्ऋलुवर्णानामस्वे स्वरे परे ह्रस्वो वा स्यात्, न चेत्तौ निमित्तनिमित्तिनावेकत्र पदे स्याताम् । नदि एषा । मधु अत्र । एकपदे तु । नद्यौ ॥

( अ इ उ वर्णाना विरामेऽनुनासिको वाऽऽ )

सामँ । साम । दधिँ । दधि ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय-गणिविरचिताया हैमलघुप्रक्रियाया असन्धि समाप्त. ।

---

## अथ व्यञ्जनसन्धिः ॥

वाक्-मह इति स्थिते ।

## धुटस्तृतीयः ॥ १ ॥

पदान्ते धुटां स्वस्तृतीयः स्यात् । वाग् मह इति भवति ।

## तृतीयस्य पञ्चमे ॥ २ ॥

वेति पदान्त इति अनुनासिक इति चानुवर्तते । एवमन्यत्राप्यपेक्षितं पदं सूत्रान्तरादनुवर्तनीयम् । पदान्तस्थस्य वर्गतृतीयस्य पञ्चमे परे स्वः पञ्चमो वा स्यात् । वाङ्महः । वाग्महः ।

( प्रत्यये च-प्रत्ययस्थे पञ्चमे परे च नित्यम्ऽऽ )

वाग्-मयं वाङ्मयम् ।

## ततो हश्चतुर्थः ॥ ३ ॥

पदान्तस्थात्तृतीयात्परस्य हस्य पूर्वतृतीयस्ववर्गश्चतुर्थो वा स्यात्। वाग्घरिः। वाग्हरिः। तत्-हितम्। तद्धितम्। तद्हितम्।

## नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे ॥ ४ ॥

पदान्तस्थस्य प्रशान्वर्जशब्दसंबन्धिनो नस्य चटतेषु सद्वितीयेष्वधुट्परेषु शषसा यथासंख्यं स्युः। अनुस्वारानुनासिकौ च पूर्वस्य। भवांश्चारुः। भवाँश्चारुः। भवांश्छेकः। भवाँश्छेकः। भवांष्टकः। भवाँष्टकः। भवांष्ठकारः। भवाँष्ठकारः। भवांस्तनुः। भवाँस्तनुः। भवांस्थुडति। भवाँस्थुडति। प्रशान्वर्जनात्। प्रशाञ्चरः। अधुडिति किम्। भवान्त्सरुकः।

## द्विः कानः कानि सः ॥ ५ ॥

द्विरुक्तस्य कानः कानि परे सः स्यात्। अनुस्वारानुनासिकौ च पूर्वस्य। कांस्कान् काँस्कान्।

## नः शि ञ्च् ॥ ६ ॥

पदान्तस्थस्य नस्य शे परे ञ्च् वा स्यात्। भवाञ्च्शूरः भवाञ् शूरः। अश्च इत्येव। भवाञ्श्च्योतति।

## प्रथमादधुटि शश्छः ॥ ७ ॥

पदान्तस्थात्प्रथमात्परस्य शस्याधुटि छो वा

स्यात् । भवाञ्छूरः । भवाञ्चशूरः, इति विकल्पद्वये त्रैरूप्यम् । अधुटीति किम् ? वाक्श्च्योतति ।

ङ्णोः कटावन्तौ शिटि नवा ॥ ८ ॥

पदान्ते । प्राङ्क्शेते । प्राङ्क्छेते । प्राङ्शेते । सुगुणट्शेते । सुगणट्छेते । सुगणशेते ।

तौ मुमो व्यञ्जने स्वौ ॥ ९ ॥

मुइत्यागमस्य पदान्तस्थस्य च मस्य व्यञ्जने परे तस्यैव स्वावनुस्वारानुनासिकौ स्याताम् । त्वम् चारुः । त्वंचारुः । त्वञ्चारुः । त्वं टकः । त्वण्टकः । कंयः । कॅय्यः । पुरो व्यञ्जनाभावे तु नानुस्वारः । त्वम् । सम्राट् इति तु निपातः ।

ह्रस्वाद् ङ्णनो द्वे ॥ १० ॥

ह्रस्वात्परेषां पदान्तस्थानां ङ्णनां स्वरे परे द्वित्वं स्यात् । क्रुङ्ङास्ते । सुगण्णिह । लिखन्नास्ते ।

स्वरेभ्यः ॥ ११ ॥

स्वरात्परस्य छस्य द्वित्वं स्यात् ।

अघोषे प्रथमोऽशिटः ॥ १२ ॥

अघोषे परे शिड्वर्जस्य धुटः स्वः प्रथमः स्यादित्याचछस्य चत्वे । तवच्छत्रम् । इच्छति ।

अनाङ्माङो दीर्घाद्वा छः ॥ १३ ॥

दीर्घाद्दीर्घस्थानीयाच्च प्लुतात्स्वरात्परश्छो द्विर्वा

स्यात्। कन्याच्छत्रं, कन्याछत्रम्। मुनेच्छत्रं, मुनेछत्रम्। (आङ्माङ्भ्यां तु नित्यम्। *) आच्छाया। माच्छिदत्।

## तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ ॥ १४ ॥

तवर्गस्य शचवर्गयोगे चवर्गः षटवर्गयोगे टवर्गः स्यात्। तत्-शास्त्रं तच्शास्त्रम्। तत्-चारु, तच्चारु। पिष्-तं, पिष्टम्। तत्-टकारः, तट्टकारः। ईड्-ते, ईट्टे।

## सस्य शषौ ॥ १५ ॥

सकारस्य शचवर्गाभ्यां योगे शः षटवर्गाभ्यां च योगे षः स्यात्। वृस्-चति, वृश्चति। दोस्-षु, दोष्षु। पदान्तापदान्तयोरयं विधिः।

## न शात् ॥ १६ ॥

शात्परस्य तवर्गस्य चवर्गो न स्यात्। प्रश्नः।

## पदान्ताट्टवर्गादनाम्नगरीनवतेः ॥ १७ ॥

पदान्तस्थाट्टवर्गात्परस्य तवर्गस्य टवर्गः सस्य च षो न स्यात् षड् नयाः षण्नयाः। षट्सु। नाम्नगरीनवतीनां तु स्यात्। षण्णाम्। षण्णगरी। षण्णवतिः।

## षि तवर्गस्य ॥ १८ ॥

पदान्तस्थस्य तवर्गस्य षे परे टवर्गो न स्यात्। तीर्थकृत् षोडशः शान्तिः।

## लि लौ ॥ १९ ॥

पदान्तस्थस्य तवर्गस्य ले परे लौ स्याताम् । तत्र नकारस्य सानुनासिको लः शेषाणां निरनुनासिकः । तद्-लूनं, तल्लूनम् । भवान्-लिखति, भवाँल्लिखति ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां व्यञ्जनसन्धिः समाप्तः ॥

---

## अथ रेफसन्धिः ॥

कस् चारु इति स्थिते ।

## सो रुः ॥ १ ॥

पदान्ते सो रुः स्यात् । उकारः स्वाभाविकरेफाद्भेदज्ञापनार्थ इत् । कर् चारु इति जाते ।

## चटते सद्वितीये ॥ २ ॥

पदान्तस्थस्य रस्य चटतेषु सद्वितीयेषु परेषु यथासंख्यं शषसा नित्यं स्युः । कश्चारुः । ( निरनुबन्धग्रहणे सामान्यग्रहणम्* ) प्रातश्चरति । कश्छन्नः । कष्टः । कष्ठः । कस्तः । कस्थः ।

## शषसे शषसं वा ॥ ३ ॥

पदान्तस्थस्य रस्य शषसेषु परेषु शषसा वा स्युः । कश्शेते । पक्षे—

## रः पदान्ते विसर्गस्तयोः ॥ ४ ॥

पदान्तस्थस्य रस्य विरामेऽघोषे परे च विसर्गः

स्यात् । कः शेते । कष्पण्ढः, कः पण्ढः । कस्साधुः, कः साधुः ।

## रः कखपफयोः ×क×पौ ॥ ५ ॥

पदान्तस्थस्य रस्य कखयोः परयोः ×को वा पफयोश्च परयोः ×पोवा स्यात् । क×करोति ×कः करोति। क×खनति, कः खनति । क×पचति, कः पचति । क×फलति, कः फलति । पुन×पुष्टं, पुनः पुष्टं इत्यादि । (ख्यागिरोर्नित्यं विसर्गः*) । कः ख्यातः । शिट्परेऽघोपे परेप्येवम् । कः प्साति । ( अघोपपरे शिटि परे रो लुग्वा* ) । कश्च्योतति, कः श्च्योतति ।

## अतोऽति रोरुः ॥ ६ ॥

अकारात्परस्य रोरति परे उः स्यात् । अवर्णस्येति ओत्वे एदोत इत्यकारलोपे च । कोऽर्थः । रोरिति किम् । प्रातरत्र ।

## रोर्यः ॥ ७ ॥

अवर्णाद् भोसूभगोस्अघोसूशब्देभ्यश्च परस्य रोः स्वरे परे यः स्यात्तस्य च स्वरे परे लुग्वा लुक्यसन्धि श्च । कयास्ते, क आस्ते । कयिह क इह । भोयत्र, भो अत्र । भगोयत्र भगो अत्र । अघोयत्र, अघो अत्र । अवर्णादिति किम्? निधिरत्र । भोस् इत्यादय आमन्त्रणे सकारान्ता अव्ययाः ।

## अवर्णभोभगोऽघोर्लुगसन्धिः ॥ ८ ॥

अवर्णाद्भो इत्यादिभ्यश्च रोर्घोषवति परे लुक् स्यात् । स च न सन्धिहेतुः । देवा यान्ति । भो यासि । भगो हस । अघो वद ।

## घोषवति ॥ ९ ॥

अतः परस्य रोर्घोषवति उः स्यात् । धर्मो जयति ।

सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।
परेण पूर्वबाधो वा प्रायशो दृश्यतामिह ॥ १ ॥

रोरित्येव । प्रातर्याति ।

## रो रे लुग् दीर्घश्चादिदुतः ॥ १० ॥

रस्य रेफे परे लुक् स्यात्तत्सन्नियोगे च पूर्वस्थानां अ इ उ इत्येषां दीर्घः । मुनी राजते । साधू राजते । पुना रमते । अकारात्परस्य रोस्तु घोषवतीत्युकारः । जिनो राजते ।

## रो लुप्यरि ॥ ११ ॥

रेफवर्जिते वर्णे परे पदान्तस्थस्याह्नो नस्य स्यादिलुपि सत्यां रः स्यात् । अहरधीते । अहर्गणः । लुकि तु ।

## अह्नः ॥ १२ ॥

*अहन्संबन्धिनो नस्य पदान्ते रुः स्यात् ।* हे दीर्घाहो निदाघ । अरीति किम् । अहोरूपम् ।

## वाऽहर्पत्यादयः ॥ १३ ॥

एषु विसर्गाद्यभावो वा स्यात् । अहर्पतिः । अह$\asymp$-पतिः । अहःपतिः । गीर्पतिः । गी$\asymp$पतिः । गीःपतिः ।

## एतत्तदश्च व्यञ्जनेऽनग्नञ्समासे ॥ १४ ॥

एतच्छब्दात्तच्छब्दाच्च परस्य सेर्व्यञ्जने परे लुक् स्यात् । एष दत्ते । स लाति । अकि नञ्समासे च न । एषकः कृती । सको याति । अनेषो याति । असो याति ।

## तदः सेः स्वरे पादार्था ॥ १५ ॥

तच्छब्दात्परस्य सेः स्वरे परे लुक् स्याद्यदि सेर्लुकि सत्यामेव श्लोकादिपादः पूर्येत ।
सैष दाशरथी रामः सैषधीरनुरुध्यति ॥
अन्यत्र यथाप्राप्तम् ।
स एष भरतो राजा स एष नलभूपतिः ॥ २ ॥
संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा व्यपेक्षामपेक्षते ॥३॥

इति महोपाध्यायश्रीकीर्तिवि[illegible]यगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां रेफसन्धिः समाप्त ।

## अथ विभक्तिर्विभाव्यते ॥

## अधातुविभक्तिवाक्यमर्थवन्नाम ॥ १ ॥

धातुविभक्त्यन्तवाक्यवर्जमर्थवच्छब्दरूपं नाम स्यात्ततः स्यादयः सप्त विभक्तयो योज्यन्ते ।

## स्यौ जसित्यादि ॥ २ ॥

सि औ जस् इति प्रथमा । अम् औ शस् इति द्वितीया । टा भ्यां भिस् इति तृतीया । ङे भ्यां भ्यस् इति चतुर्थी । ङसि भ्यां भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी । तत्राप्यर्थैकत्वविवक्षायां प्रथमैकवचनं सिः । इकार उच्चारणार्थ इत् । देवस् इति स्थिते । सोरुः । रः पदान्ते विसर्गस्तयोः । देवः । द्वित्वे, देव औ । ऐदौत्सन्ध्यक्षरैरिति । देवौ । बहुत्वे, देव जस् । जकारो विशेषणार्थः ।

## अत आः स्यादौ जस्भ्याम्ये ॥ ३ ॥

स्यादौ जसि भ्यामि ये च परे अत आः स्यात् । ततः समानानां तेनेति दीर्घे, देवाः ।

अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ।
पूर्व (र्वे) । दीर्घस्वरं दृष्ट्वा परलोपो विधीयते ॥१॥

यद्वा 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति दीर्घस्यापि दीर्घत्वम् । द्वितीयैकवचने, देव अम् ।

## समानादमोऽतः ॥ ४ ॥

समानात्परस्यामोऽकारस्य लुक् स्यात् । देवम् । देवौ । बहुवचने, देव शस् । शकारः प्राग्वत् ।

## शसोऽता सश्च नः पुंसि ॥ ५ ॥

शस्संबन्धिनाऽकारेण सह पूर्वसमानस्य दीर्घः स्यात्, तत्सन्नियोगे च पुंलिङ्गे शसः सो नः स्यात् । देवान् । तृतीयैकवचने, देव टा । टकार इत् ।

## टाङसोरिनस्यौ ॥ ६ ॥

आत्परयोष्टाङसोरिनस्यौ स्याताम् । देवेन । अत आ स्यादौ इत्याऽऽत्वे । देवाभ्याम् ।

## भिस ऐस् ॥ ७ ॥

आत्परस्य स्यादेर्भिस ऐस् स्यात् । देवैः । चतुर्थ्येकवचने, देव ङे । ङकारो ङित्कार्यार्थः सर्वत्र ।

## ङेङस्योर्यातौ ॥ ८ ॥

अकारात्परस्य ङेर्यो, ङसेश्च आत् स्यात् । अत आ इत्यात्वे देवाय । देवाभ्याम् । देव-भ्यस् इति स्थिते ।

## एद्बहुस्भोसि ॥ ९ ॥

बहुत्वे स्यादौ सादौ भादौ ओसि च परेऽत एत्स्यात् । देवेभ्यः । पञ्चम्येकवचने, देव ङसि । इकारो ङसो विशेषार्थः । ङेङस्योरित्यात् । देवात् ।

देवाभ्याम् । देवेभ्यः । टाङसोरिति ङसः स्याऽऽदेशे, देवस्य । ओस्येत्वेऽयादेशे, देवयोः । देव-आम् इति स्थिते ।

## ह्रस्वाऽऽपश्च ॥ १० ॥

ह्रस्वादावन्तात् स्त्रीदूदन्ताच्च परस्यामो नाम् स्यात् ।

## दीर्घो नाम्यतिसृचतसृपृः ॥ ११ ॥

तिसृ-चतसृ-परान्तवर्जसमानस्य नामि परे दीर्घः स्यात् । देवानाम् । सप्तम्येकवचने, देवे । द्विवचने देवयोः । बहुवचने, एद्बहुस्भोसि इत्येत्वे, देवे-सु इति स्थिते ।

## नाम्यन्तस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेपि ॥ १२ ॥

नाम्यन्तस्थाकवर्गेभ्यः परस्य पदमध्ये वर्तमानस्य केनचित् सूत्रेण कृतस्य सस्य षः स्यात् । शिटा नकारेण च व्यवधानेपि स्यात् । देवेषु ।

## अदेतः स्यमोर्लुक् ॥ १३ ॥

अकारान्तादेकारान्ताच्च सेस्तदादेशस्याऽमश्च संबोधने लुक् स्यात् । संबोधनाभिव्यक्तये हेशब्दस्य प्राक्प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपटादयोऽकारान्ताः पुंलिङ्गाः । सर्वादीनां तु

विशेषः । सर्व विश्व उभ उभयट् अन्य अन्यतर इतर डतर डतम त्व त्वत् नेम समसिमौ सर्वार्थौ । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरम्बहिर्योगोपसंव्यानयोरपुरि । त्यद् तद् यद् अदस् इदम् एतद् एक द्वि युष्मद् असद् भवतु किम्, इत्यसंज्ञाया सर्वादिः। एते सर्वादयस्त्रिलिङ्गाः । तत्र पुलिङ्गे रूपाण्युच्यन्ते । सर्वः । सर्वौ ।

## जस इः ॥ १४ ॥

सर्वादेरकारान्तस्य जस इः स्यात् । सर्वे । सर्व । सर्वौ । सर्वान् । सर्वेन इति जाते ।

## रषृवर्णान्नो ण एकपदेऽनन्त्यस्याऽलचटतवर्गशसान्तरे ॥ १५ ॥

रेफषकारऋवर्णेभ्यः परस्य एभिः सहैकपदस्थस्याऽनन्त्यस्य नो ण स्यात् । लादीन्विना शेषवर्णव्यवधानेऽपि भवति । सर्वेण । एकपद इति किम्? अग्निर्नयति । चर्मनासिकः । अनन्त्य इति किम् ? सर्वान् । लादिवर्जनं किम् ? विरलेन । मूर्च्छनम् । दृढेन । तीर्थेन । रशना । रसना । सर्वाभ्याम् । सर्वः ।

## सर्वादेः स्मैस्मातौ ॥ १६ ॥

सर्वादेरकारान्तस्य ङेङस्योः स्मैस्मातौ स्याताम् ।

सर्वस्मै । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्मात् । सर्वाभ्याम् । सर्वेभ्यः । सर्वस्य । सर्वयोः ।

## अवर्णस्यामः साम् ॥ १७ ॥

अवर्णान्तस्य सर्वादेरामः साम् स्यात् । एत्वषत्वे । सर्वेषाम् ।

## ङेः स्मिन् ॥ १८ ॥

सर्वादेरदन्तस्य ङेः स्मिन् स्यात् । सर्वस्मिन् । सर्वयोः । सर्वेषु । हे सर्व । हे सर्वौ । हे सर्वे ।

## नवभ्यः पूर्वेभ्य इस्मात्स्मिन्वा ॥ १९ ॥

पूर्वादिनवकाज्जसूङसिङीनामिस्मात्स्मिनो वा स्युः । पूर्वे, पूर्वाः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । नवकादिति किम् ? त्ये ।

## नेमार्द्धप्रथमचरमतयायाल्पकति-पयस्य वा ॥ २० ॥

नेमादीनां शब्दानां तयायप्रत्ययान्ताना च जस ईर्वा स्यात् । नेमे, नेमाः । द्वितये, द्वितयाः । त्रये, त्रयाः । अत्र नेमशब्दस्य सर्वादित्वान्नित्यं प्राप्ते शेषाणां चाप्राप्ते विकल्पः ।

## द्वन्द्वे वा ॥ २१ ॥

द्वन्द्वसमासे सर्वादीनां जस ईर्वा स्यात् । पूर्वापरे, पूर्वापराः ।

## न सर्वादिः ॥ २२ ॥

द्वन्द्वे सर्वादिः सर्वादिर्न स्यात्। पूर्वापराय। कतरकतमानाम्।

## तीयं ङित्कार्ये वा ॥ २३ ॥

तीयान्तं ङेङसिङिषु सर्वादिर्वा स्यात्। द्वितीयस्मै, द्वितीयाय। द्वितीयस्मात्, द्वितीयात्। द्वितीयस्मिन्, द्वितीये। तृतीयस्मै, तृतीयाय। तृतीयस्मात्, तृतीयात्। तृतीयस्मिन्, तृतीये। शेषं देववत्। उभशब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। उभयशब्दस्य द्विवचनाभाव। एव च द्वित्वे उभशब्द एकत्वबहुत्वयोश्चोभयशब्द. प्रयोज्यः। उभयो मणिः। उभये देवमनुष्याः। मासशब्दस्य विशेष.।

## मासनिशासनस्य शसादौ लुग्वा ॥२४॥

शसादौ स्यादावेषा लुग्वा स्यात्। षष्ठ्या निर्दिष्टेऽन्त्यस्य कार्यम्। मास., मासान्। मासा, मासेन।

## नाम सिदय्व्यञ्जने ॥ २५ ॥

सिति प्रत्यये यवर्जव्यञ्जनादौ च परे नाम पदं स्यात्। अवर्णभोरिति रुलुकि। माभ्याम्। धुटस्तृतीय इति दत्वे माद्भ्याम्। मासाभ्याम्। सर्वविभक्तिषु वा लुगिति केचित्। माः, मास ।

## दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा ॥ २६ ॥

शसादौ स्यादौ परे दन्तादीनां दशानां दत्प्रभृतयो दशादेशाः वा स्युः। दतः, दन्तान्। दद्भ्याम्, दन्ताभ्याम्। पदः, पादान्। पद्भ्याम्, पादाभ्याम्।

## अनोऽस्य ॥ २७ ॥

ङ्यामघुट्स्वरे च अनोऽस्य लुक् स्यात्। यूष्णः, यूषान्।

## नाम्नो नोऽनह्नः ॥ २८ ॥

पदान्ते नाम्नो नस्य लुक् स्यात्। स चेदह्नो न स्यात्। यूषभ्याम्, यूषाभ्याम्।

## ईङौ वा ॥ २९ ॥

ईकारे ङौ च परेऽनोऽस्य लुग्वा स्यात्। यूष्णि, यूषणि, यूषे। आकारान्तो विश्वपा शब्दः। विश्वपाः, विश्वपौ। विश्वपाः। समानादमोतः। विश्वपाम्।

## लुगातोऽनापः ॥ ३० ॥

आप्वर्जस्याकारस्य ङ्या शसादौ स्वरे परे च लुक् स्यात्। विश्वपः। विश्वपा। विश्वपाभ्याम्। अदेतः स्यमोरित्यत्रात एव लुक् उक्तत्वात्, संबो-

धने सिलोपाभावः । हे विश्वपाः । एवं सोमपा-
प्रभृतयः । इकारान्तो मुनिशब्दः । मुनिः ।

इदुतोऽस्त्रेरीदूत् ॥ ३१ ॥

स्त्रेरन्ययोरिदुतोरौता सह दीर्घः स्यात् । मुनी ।

जस्येदोत् ॥ ३२ ॥

इदुदन्तयोर्जसि परे एदोतौ स्याताम् । मुनयः ।
मुनिम् । मुनी । मुनीन् ।

टः पुंसि ना ॥ ३३ ॥

इदुदन्ताभ्यां पुंसि टाया ना स्यात् । मुनिना ।
मुनिभ्याम् । मुनिभिः ।

ङित्यदिति ॥ ३४ ॥

दिद्वर्जिते ङिति स्यादौ परे इदुतोरेदोतौ स्या-
ताम् । मुनये । मुनिभ्याम् । मुनिभ्यः ।

एदोद्भ्यां ङसिङसो रः ॥ ३५ ॥

(प्रत्ययस्य विधीयमान आदेशः सर्वस्य स्यात् ।*)
मुनेः । मुनिभ्याम् । मुनिभ्यः । मुनेः । मुन्योः ।
मुनीनाम् ।

ङिर्डौ ॥ ३६ ॥

इदुदन्तात्परो ङिर्डौः स्यात् ।

डित्यन्त्यस्वरादेः ॥ ३७ ॥

अन्त्यस्वरस्य तदादेः शब्दस्य च डित्प्रत्यये लुक्

स्यात् । मुनौ । मुन्योः । मुनिषु । संबोधने ह्रस्वस्य गुणः सिना सह । हे मुने । हे मुनी । हे मुनयः । एवं रविप्रभृतयः । साधुप्रभृतय उकारान्ता अप्येवम् । साधुः । साधू । साधवः । साधुम् । साधू । साधून् । साधुना । साधुभ्याम् । साधुभिः । साधवे । साधुभ्याम् । साधुभ्यः । साधोः । साधुभ्याम् । साधुभ्यः । साधोः । साध्वोः । साधूनाम् । साधौ । साध्वोः । साधुषु । हे साधो । हे साधू । हे साधवः । अतिक्रान्तः स्त्रियमतिस्त्रिः ।

## स्त्रियाः ॥ ३८ ॥

स्त्रिया इवर्णस्य स्वरादौ प्रत्यये परे इय् स्यात् । अमि शसि च वा । अतिस्त्रियौ । जसि, तृतीयादौ च मुनिवत् । अतिस्त्रयः । अतिस्त्रिम्, अतिस्त्रियम् । अतिस्त्रियः, अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रौ । ओसि च इयादेशः । अतिस्त्रियोः । तथोक्तम् ।

ओस्यौकारे च नित्यं स्यादम्–शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥ १ ॥

(अनामन्त्र्यस्य सखिशब्दस्य सेर्डा वक्तव्यः ॐ)
सखा । आमन्त्रणे तु । हे सखे ।

## सख्युरितो ऽशावैत् ॥ ३९ ॥

इदन्तस्य सखिशब्दस्य स्वसम्बन्धिन्यन्यसम्ब-

न्धिनि वा शिवर्जे शेषे घुटि ऐत् स्यात्। सखायौ। सखायः। सखायम्। सखायौ। सखीन्।

## न ना ङिदेत् ॥ ४० ॥

केवलसखिपतेर्यष्टाया ना ङिति परे एच्चोक्तः स न स्यात्। सख्या। सख्ये। केवलेत्युक्तेः समस्तस्य स्यात्। प्रियसखिना। प्रियसखये। पञ्चमीषष्ठयेकवचनयोरेत्वनिषेधात् इवर्णादेरिति यत्वे।

## खितिखीतीय उर् ॥ ४१ ॥

एतत्संबन्धियात्परयोर्ङसिङसोरुर् स्यात्। सख्युः २।

## केवलसखिपतेरौ ॥ ४२ ॥

केवलसखिपतिभ्यामिदन्ताभ्यां परो ङिरौः स्यात्। सख्यौ। केवलेत्येव। प्रियसखौ। केवलः पतिशब्दः प्रथमाद्वितीययोर्मुनिवत्। तृतीयादौ च सखिवत्। पत्या। पत्ये। पत्युः २। पत्यौ। समस्तश्च सर्वत्र, मुनिवत्। मुनिपतिना। द्विशब्दो नित्यं द्विवचनान्तः।

## आ द्वेरः ॥ ४३ ॥

द्विशब्दपर्यन्तानां त्यदादीनां स्वसम्बन्धिनि स्यादौ तसादौ च परे अः स्यात्। द्वौ। द्वौ। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः। स्वसम्ब-

न्धिनीति किं प्रियत्री नरौ । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ ।

## त्रेस्त्रयः ॥ ४४ ॥

आमि त्रेस्त्रयः स्यात् । (अनेकवर्णः सर्वत्र ।) त्रयाणाम् । तत्सम्बन्धिविज्ञानात् प्रियत्रीणाम् । त्रिषु । कतिशब्दो नित्यं बहुत्वे ।

## डतिष्णः संख्याया लुप् ॥ ४५ ॥

डतिषनान्तानां संख्यावाचिनां स्वजस्-शसोर्लुप् स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । स्वेति किं प्रियकतयः, प्रियकतीन् । एवं यति-तति-शब्दौ । ईकारान्तो नीशब्दः । नयतीति नीः ।

## धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ॥ ४६ ॥

धातोरिवर्णोवर्णयोः स्वरादौ प्रत्यये इयुवौ स्याताम् । नियौ । नियः । निया । नीभ्याम् । नीभिः । निये ३ । नियः २ ।

## निय आम् ॥ ४७ ॥

नियः परस्य ङेराम् स्यात् । नियाम् । हे नीः । एवं, लूः । लुवौ । लुवः । लुवि । हे लूः । सेनानीशब्दस्य विशेषः । सेनां नयतीति सेनानीः ।

क्विवृत्तेरसुधियस्तौ ॥ ४८ ॥

क्विबन्तेनैव या वृत्तिः समासस्तस्याः सुधीशब्द-वर्जितायाः संबन्धिनो धातोरिवर्णोवर्णयोः स्वरादौ स्यादौ य्वौ स्याताम् । सेनान्यौ । सेनान्यः ४ । से-नान्यम्, सेनान्याम् । सप्तम्येकवचने, निय आम् । सेनान्याम् । हे सेनानीः । एवं ग्रामणी–प्रभृतयः । सुलूः । सुल्वौ । सुल्वः । सुल्वां । सुल्वि । हे सुलूः । एव खलपूप्रभृतयः । अत्र सुधीशब्दवर्जनात्तस्य नीशब्दवत्प्रक्रिया । सुधीः । सुधियौ । सुधियाम् । सुधियि ।

दृन्पुनर्वर्षाकारैर्भुवः ॥ ४९ ॥

दृनादिपूर्वस्य भुवः स्वरादौ स्यादौ वः स्यात् । दृन्भ्वौ । दृन्भ्वः । क्विवृत्तेरिति वत्वे सिद्धे नियमार्थमिदम् । सिद्धे सत्यारम्भो नियमार्थ इति । तेनान्यो भूशब्दो लूशब्दवत् । स्वयंभू. । स्वयं-भुवौ । यवान्क्रीणातीति यवक्रीः ।

संयोगात् ॥ ५० ॥

संयोगात्परयोर्धातोरिवर्णोवर्णयोः स्वरादौ इ-युवौ स्याताम् । क्विवृत्तेरित्यस्यापवादः । यवक्रियौ । यवक्रियः । एवं कटप्रूशब्दोऽपि । सुश्रीशब्दस्य ङित्सु विशेष. ।

वेयुवोऽस्त्रियाः ॥ ५१ ॥

इयुवृस्थानिनौ यौ नित्यस्त्रीलिङ्गावीदूतौ तदन्तात् स्त्रीवर्जात्परेषां स्यादेर्ङितां दै दास् दास् दामो वा स्युः । ( आमो नाम् च वा वक्तव्यः, ) । सुश्रियै, सुश्रिये । सुश्रियाः, सुश्रियः । सुश्रियाम्, सुश्रीणाम् । सुश्रियाम्, सुश्रियि ।

## भ्रूश्नोः ॥ ५२ ॥

भ्रूश्नोरुवर्णस्य स्वरादौ उव् स्यात् । अतिभ्रुवै, अतिभ्रुवे । अतिभ्रुवाः, अतिभ्रुवः २। अतिभ्रूणाम्, अतिभ्रुवाम् । अतिभ्रुवाम्, अतिभ्रुवि । हे अतिभ्रूः । नित्यं स्त्रीलिङ्गे वर्तमानत्वाभावात् ग्रामण्ये इत्यादौ आध्यै इत्यादौ इयुवृस्थानित्वाभावाच्च नायं विधिः । क्विबन्ता धातुत्वं नोज्झन्ति शब्दत्वं च प्रतिपद्यन्ते इत्येषां धातुत्वं ज्ञेयम् । ऋकारान्तः पितृशब्दः ।

## ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डा ॥ ५३ ॥

ऋदन्तादुशनसादेश्च परस्य सेर्डाः स्यात् । पिता । अतिपिता

---

१ सखायमिच्छति सखीयति सखी । योऽनेकस्वरस्य । अनेकस्वरस्य धातोरिवर्णस्य स्वरादौ प्रत्यये परे य स्यात् । सख्यौ २ । सख्य २ । सख्यु २ । सख्या । सख्यि । एव पती, पत्नी । वसुमिच्छति वसूयति वसूयतीति वसू । स्यादौ वः । अनेकस्वरस्य धातोरुवर्णस्य स्वरादौ स्यादौ परे व स्यात् । वस्वौ । वस्व ४ । वस्वा वस्वि । हे वसू । इमौ शब्दौ पुस्तकान्तरे लिखितौ स्त ।

अडौं च ॥ ५४ ॥

ऋतो डौ च घुटि च परे अर् स्यात् । पितरौ । पितरः । संबोधने ह्रस्वस्य गुणः । हे पितः । पितरम् । पितरौ । पितॄन् । पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः २ ।

ऋतो डुर् ॥ ५५ ॥

ऋतः परयोर्ङसिङसोर्डुर् स्यात् । पितुः २ । पित्रोः २ । पितॄणाम् । पितरि । पितृषु । एवं नृ-भ्रातृ-प्रभृतयः । किंतु, नुर्वा नामि दीर्घः । नॄणाम् नृणाम् । कर्त्रादीनां विशेषः ।

तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ॥ ५६ ॥

तृच्तृन्नन्तस्य स्वस्रादीनां च घुट्यार् स्यात् । इति पञ्चस्वार् प्राप्तावपि विशेषत्वात् ऋदुशनसित्यादिना सेर्डाः । कर्ता । अतिकर्त्ता । कर्तारौ । कर्तारः । कर्तारम् । कर्तारौ । शेषं पितृवत् । एवं नप्तृप्रभृतयः । क्रुशधातोस्तुन् प्रत्यये क्रोष्टुशब्दः ।

क्रुशस्तुनस्तृच् पुंसि ॥ ५७ ॥

क्रुशो यस्तुन् तस्य शेषे घुटि परे तृच् स्यात् । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । शेषे घुटीत्येव । हे क्रोष्टो । घुटीति किम् । क्रोष्टून् ।

टादौ स्वरे वा ॥ ५८ ॥

तुनस्तृच्। क्रोष्टा, क्रोष्टुना। क्रोष्टुभ्याम् ३। क्रोष्ट्रे, क्रोष्टवे। क्रोष्टुः, क्रोष्टोः २। क्रोष्ट्रोः, क्रोष्ट्रोः २। आमि तु नित्यत्वात्पूर्वं नामि स्वरादित्वाभावात्तृजभावः। क्रोष्टूनाम्। क्रोष्टरि, क्रोष्टौ। क्रोष्टुषु। ऋकारान्तादयोऽप्रसिद्धाः। एकारान्तः अतिहे शब्दः। अतिहेः। स्वरादावयादेशः। अतिहयौ। संबोधनेऽदेतः स्यमोरिति सिलुकि। हे अतिहे। ऐकारान्तः सुरैशब्दः।

## आ रायो व्यञ्जने ॥ ५९ ॥

व्यञ्जनादौ स्यादौ परे रैशब्दस्य आः स्यात्। सुराः। स्वरादावायादेशः। सुरायौ। ओकारान्तो गोशब्दः।

## ओत और्घुटि ॥ ६० ॥

गौः। गावौ। गावः।

## आ अम्शसोऽता ॥ ६१ ॥

अम्शसोरता सह ओत आः स्यात्। गाम्। गावौ। गाः। गवा। गोभ्याम्। एदोद्भ्याम् ङसिङसोर, इति रत्वे। गोः २। गवाम्। गोषु। एवं सुद्योप्रभृतयः। औकारान्तो ग्लौशब्दः। ग्लौः। ग्लावौ। हे ग्लौः। ग्लौभ्याम्। एवं सुनौप्रभृतयः।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां स्वरान्ताः पुंलिङ्गाः।

---

## अथ स्वरान्ताः स्त्रीलिङ्गाः ॥

आकारान्तः स्त्रीलिङ्गो गङ्गाशब्दः

### दीर्घङ्याब्व्यञ्जनात्सेः ॥ १ ॥

दीर्घङ्यावन्ताभ्यां व्यञ्जनाच्च परस्य सेर्लुक् स्यात् । गङ्गा ।

### औता ॥ २ ॥

आबन्तस्य औता सह एत् स्यात् । गङ्गे । गङ्गाः । गङ्गाम् । गङ्गे । शसि पुंस्त्वाभावान्नत्वाभावेऽकारेण सह दीर्घ एव । गङ्गाः ।

### टौस्येत् ॥ ३ ॥

आबन्तस्य टौसोः परयोरेत्वं स्यात् । गङ्गया । गङ्गाभ्याम् २ । गङ्गाभिः ।

### आपो ङितां यै यास् यास् याम् ॥४॥

आबन्तात् परेषां ङितामेते आदेशाः स्युः । गङ्गायै । गङ्गायाः २ । ह्रस्वापश्चेति आमो नामादेशे, गङ्गानाम् । गङ्गायाम् । गङ्गयोः २ । गङ्गासु ।

### एदापः संबोधने ॥ ५ ॥

आबन्तस्य सिना सह एत्स्यात् । हे गङ्गे । हे गङ्गे । हे गङ्गाः ।

### नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः ॥ ६ ॥

नित्यं दैदासादयो येभ्यस्ते नित्यदितस्तेषां द्विस्वराम्बार्थानां च सिना सह ह्रस्वः स्यात् । हे

अम्ब । हे अल्ल । हे अक्क । हे अत्त । एवं श्रद्धामेधादयः । ( शसादौ स्यादौ परे निशाया अन्त्यस्य लुक् नासिकाया नसादेशश्च वा । ) निशः, निशाः । निशा, निशया । निज्भ्याम्, निशाभ्याम् । निच्छु । नसः, नासिकाः । नोभ्याम्, नासिकाभ्याम् ।

## सर्वादेर्डस्पूर्वाः ॥ ७ ॥

सर्वादेरावन्तस्य ङितां यै यास् यास् यामो डस्पूर्वाः स्युः । सर्वस्यै । सर्वस्याः २ । सर्वस्याम् । शेषं गङ्गावत् ।

## जराया जरस्वा ॥ ८ ॥

स्वसम्बन्धिन्यन्यसम्बन्धिनि वा स्वरादौ स्यादौ । जरसौ, जरे २ । जरसः, जराः २ । जरसा, जरया । जराभ्याम् ४ । अतिजरसौ । इकारान्तो बुद्धिशब्दः । स च प्रायो मुनिवत् । बुद्धिः । बुद्धी । बुद्धयः । हे बुद्धे । बुद्धिम् । बुद्धी । बुद्धीः । बुद्ध्या ।

## स्त्रियां ङितां वा दैदासदासदाम् ॥९॥

स्त्रीलिङ्गादिदुदन्तात्परेषां स्वसम्बन्धिनामन्यसम्बन्धिनां च ङितामेते आदेशा वा स्युः । दकारो विशेषार्थः । बुद्ध्यै, बुद्धये । बुद्ध्याः २ बुद्धेः २ । बुद्ध्याम्, बुद्धौ । एवं प्रियबुद्ध्यै, प्रियबुद्धये पुंसे । एवं मति–भूति–प्रभृतयः । धेनुः । धेनू । धेनवः । हे धेनो । धेनुम् । धेनू । धेनूः । धेन्वा । धेन्वै,

धेनवे । धेन्वाः, धेनोः २ । धेन्वाम्, धेनौ । प्रियधेन्वै, प्रियधेनवे पुंसे । ईकारान्तो नदीशब्दः । दीर्घङ्याबिति सिलुकि । नदी । नद्यौ । नद्यः । नदीम् । नद्यौ । नदीः । नद्या ।

स्त्रीदूतः ॥ १० ॥

नित्यस्त्रीलिङ्गादीदूदन्तात्परेषां स्वाऽस्वङितां दैदासृदास् दामो नित्यं स्युः । नद्यै । नद्याः २ । नद्याम् । स्वास्वेतिवचनात् प्रियनद्यै पुंसे । संबोधने नित्यदित्त्वाद्ध्रस्वे, हे नदि । एवं गौरीप्रभृतयः । स्त्रीशब्दस्य ङ्यन्तत्वात्सेर्लुकि, स्त्री । स्वरादौ इतीयादेशे, स्त्रियौ । स्त्रियः । वाम्शसि । स्त्रियम् स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । हे स्त्रि । लक्ष्मीशब्दस्य ङ्यन्तत्वाऽभावात्सेर्लुग्नास्ति । लक्ष्मीः । शेषं नदीवत् । वधूः । वध्वौ । वध्वः । वधूम् । वध्वौ । वधूः । वध्वा । वध्वै । वध्वाः २ । वध्वाम् । हे वधु । एवं जम्ब्वादयः । श्री-ह्री-धीशब्दाः सुश्रीवत् । भूः स्वयंभूवत् । भ्रूरतिभ्रूवत् । मातृशब्दः पितृवत् । माता मातरौ । मातॄः । स्वसृशब्दः कर्तृवत् । स्वसा । स्वसारौ । स्त्रियां क्रुशस्तुनस्तृच् निर्निमित्त एव स्यात् । ततो ङ्यां क्रोष्ट्री । रै-गो-नौ शब्दाः प्राग्वत् ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां स्वरान्ताः स्त्रीलिङ्गाः ।

---

## अथ स्वरान्ता नपुंसकलिङ्गाः ॥

तत्र अकारान्तो नपुंसकलिङ्गः कुलशब्दः ।

### अतः स्यमोऽम् ॥ १ ॥

अकारान्तस्य नपुंसकस्य स्वस्यमोरम् स्यात् । कुलम् ।

### औरीः ॥ २ ॥

नपुंसकस्य स्वऔरीः स्यात् । कुले ।

### नपुंसकस्य शिः ॥ ३ ॥

नपुंसकस्य जस्–शसोः शिः स्यात् । स च घुट्-संज्ञकः, शेषघुट्संज्ञकश्च । शकारो विशेषार्थः ।

### स्वराच्छौ ॥ ४ ॥

शौ परे स्वरान्तान्नपुंसकात् नोऽन्तः स्यात् ।

### नि दीर्घः ॥ ५ ॥

शेषघुट्परे नकारे परे स्वरस्य दीर्घः स्यात् । कुलानि । द्वितीयायामप्येवम् । अदेतः स्यमोरिति सिलुकि हे कुल । तृतीयादिषु देववत् । सर्वादिष्वन्यादीनां विशेषः ।

### पञ्चतोऽन्यादेरनेकतरस्य दः ॥ ६ ॥

अन्यादिपञ्चकस्यैकतरवर्जस्य स्यमोर्दः स्यात् । अन्यद् ।

### विरामे वा ॥ ७ ॥

विरामस्थस्य शिड्वर्जस्य धुटः स्वप्रथमो वा

स्यात्। अन्यत्। अन्यतरद् २। इतरद् २। कतरद् २। कतमद् २। एकतरवर्जनादेकतरम्। (आसनस्य शसादौ स्यादौ परेऽन्त लुग्वा।) आस्यशब्दस्यासन्नादेश इति पाणिनीयाः। आसानि। आस्ना। आसभ्याम्। (हृदयोदकयोर्हृदुदन्नादेशौ च शसादौ वा॥।)

## धुटां प्राक्॥ ८॥

स्वरात्परा या धुड्जातिस्तदन्तस्य धुटि परे धुटः प्राग्नोऽन्तः स्यात्।

## म्नां धुड्वर्गेऽन्त्योऽपदान्ते॥ ९॥

अपदान्तस्थानां म्नां वर्ग्ये धुटि परे पुरःस्थधुट्संबन्धी पञ्चमः स्यात्। हृन्दि। हृदा। हृद्भ्याम्। उदानि। उद्ना। उदभ्याम्। पक्षे त्वासनादयः कुलवत्।

## क्लीबे॥ १०॥

नपुंसकस्य स्वरान्तस्य ह्रस्वः स्यात्। विश्वपम्। इत्यादि कुलवत्। इकारान्तो वारिशब्दः।

## अनतो लुप्॥ ११॥

अकारान्तवर्जनपुंसकस्य स्यमोर्लुप् स्यात्। वारि २। वारि औ इति स्थिते औरीः, इतीकारे जाते।

## अनाम्स्वरे नोऽन्तः॥ १२॥

नाम्यन्तस्य नपुंसकस्याऽऽम्वर्जे स्वरादौ स्यादौ

नोऽन्तः स्यात् । वारिणी २ । वारीणि २ । वारिणा । वारिणे । वारिणः २ । वारिणोः २ । आमि मुनिवत् । वारीणाम् । वारिणि । संबोधने ।

## नामिनो लुग्वा ॥ १३ ॥

नाम्यन्तस्य नपुंसकस्य स्यमोर्लुग् वा स्यात् । लुकि च स्थानिवद्भावाल्लुप्तप्रत्ययनिमित्तकं कार्यं स्यादिति सिना सह गुणे हे वारे । पक्षे अनतो लुबिति सेर्लुप् । लुपि न तन्निमित्तमिति गुणाभावे हे वारि । स्वसम्बन्धिविज्ञानात् हे प्रियवारे नर, नात्र विकल्पः । मधु २ । मधुनी २ । मधूनि २ । मधुना । हे मधो । हे मधु । दध्यादीनां टादौ विशेषः ।

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥ १४ ॥

एषां नपुंसकानां स्वेऽस्वे वा टादौ स्वरे अन् स्यात् । अनोऽस्येत्यल्लुकि । दध्ना । प्रियदध्ना । ईङौ वा । दध्नि, दधनि । अस्थ्ना । अत्यस्थ्ना । सक्थ्ना । अक्ष्णा । इह द्विधा लिङ्गव्यवस्था । केचिद् दध्यादिवज्जातिशब्दाः स्वत एव लिङ्गमुपाददते । गुणक्रियाद्रव्यसंबन्धनिमित्ताश्च केचित्पट्वादिवद्विशेष्यानुरूपं लिङ्गमिति ।

## वान्यतः पुमांष्टादौ स्वरे ॥ १५ ॥

अन्यतो विशेष्यवशान्नपुंसको नाम्यन्तष्टादौ स्वरे पुंवद्वा स्यात् । पटुना २ । पटुने, पटवे । प-

दुनः। पटोः २। पटूनाम् २। पटुनि, पटौ। नी–ग्रामण्यादिशब्दानां ह्रस्वत्वे नि, ग्रामणि कुलं। निनी ग्रामणिनी। निना, निया ग्रामण्या, ग्रामणिना। निनि। ग्रामणिनि। नियां, ग्रामण्याम्। हे ने, हे नि। हे ग्रामणे, हे ग्रामणि। कर्तृ। कर्तृणी। कर्तृणि २। हे कर्तः। हे कर्तृणी। हे कर्तृणि। कर्त्रा। कर्तृभ्यां। कर्तृभिः। कर्त्रे। एदैतोर्ह्रस्वत्वे इकार ओदौत उकारश्च वाच्यौ। ततश्च अतिहि अतिरि अतिगु अतिनु कुलमित्यादि प्राग्वत्।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां स्वरान्ता नपुंसकलिङ्गा ॥

---

## अथ व्यञ्जनान्ताः पुल्लिङ्गाः।

तत्र चकारान्तः सुवाच्शब्दः।

### चजः कगम् ॥ १ ॥

धुटि प्रत्यये पदान्ते च चजोः कगौ स्याताम्। धुटस्तृतीय इति, सुवाग्। विरामे वा। सुवाक्। सुवाचौ। सुवाग्भ्याम्। सुवाक् सु इति स्थिते, नाम्यन्तस्थेति षत्वे। कृषसंयोगे क्षः। सुवाक्षु। हे सुवाक्, हे सुवाग्। प्रत्यच् स् इति स्थिते।

### अचः ॥ २ ॥

अञ्चतेर्धातोर्धुडन्तस्य धुटि परे धुटः प्राग् नो-

ऽन्तः स्यात् । दीर्घङ्याविति सिलुकि, पदस्य संयोगान्तस्य लुक् स्यादिति चलुक् ।

युजञ्चक्रुञ्चो नो ङः ॥ ३ ॥

एषां नस्य पदान्ते ङः स्यात् । प्रत्यङ् । तवर्गस्य श्चवर्गेति, प्रत्यञ्चौ । प्रत्यञ्चः । संबोधनेऽप्येवम् । प्रत्यञ्चम् । प्रत्यञ्चौ ।

अञ्च् प्राग् दीर्घश्च ॥ ४ ॥

णिक्यघुट्वर्जे यकारादौ स्वरादौ च प्रत्यये अचश्च इत्यादेशः स्यात्, पूर्वस्वरस्य च दीर्घः । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । प्रत्यक्षु । प्राङ् । प्राञ्चौ । प्राञ्चः । हे प्राङ् । प्राचा । प्राग्भ्याम् ।

उदच उदीच् ॥ ५ ॥

णिक्यघुट्वर्जे यकारादौ स्वरादौ च । उदङ् । उदञ्चौ । उदञ्चः । उदीचः । उदीचा । उदग्भ्याम् ।

सहसमः सध्रिसमि ॥ ६ ॥

क्विन्न्तेऽञ्चतौ परे । सह अञ्चतीति सध्र्यङ् । सध्र्यञ्चौ । सध्र्यञ्चः । सध्रीचः । सध्रीचा । समम- ञ्चतीति, सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः । समीचा । सम्यग्भ्याम् ।

तिरसस्तिर्यति ॥ ७ ॥

अकारादौ क्विन्न्तेऽञ्चतौ परे तिरसस्तिरिः स्यात् । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । अकारादाविति

किम् । अवश्चादेशे मा भूत् । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् ।

## यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः ॥ ८ ॥

यजादीनां धातूनां चजोर्धातोः शस्य च धुटि प्रत्यये पदान्ते च षः स्यात् । धुटस्तृतीय इति डत्वे । देवेड्, देवेट् । देवेजौ । देवेड्भ्याम् ।

## ङ्णः सः त्सोऽश्चः ॥ ९ ॥

पदान्तस्थाभ्यां ङनाभ्यां परस्य सस्य तादिः सो वा स्यात्, अश्चः श्चावयवश्चेत्सो न स्यात् । देवेट्त्सु, देवेट्सु । हे देवेड्, हे देवेट् । तीर्थसृड्, तीर्थसृट् । कंसपरिमृड्, कंसपरिमृट् । सम्राड्, सम्राट् । विभ्राड्, विभ्राट् ।

## संयोगस्यादौ स्कोर्लुक् ॥ १० ॥

धुट्पदान्ते संयोगादिस्थयोः स्कोर्लुक् स्यात् । धानाभृड्, धानाभृट् । सस्य शषाविति, सस्य शत्वे । तृतीयस्तृतीयचतुर्थे इति शस्य जत्वे, धानाभृज्जौ । एवं मूलवृड्, मूलवृट् । मूलवृश्चौ । परिव्राड्, परिव्राट् ।

## युज्रोऽसमासे ॥ ११ ॥

युजृंपीयोगे इत्यस्यासमासे घुटि परे धुटः प्राग्

नोऽन्तः स्यात् । युङ् । युञ्जौ । युजा । युग्भ्याम् । असमासे इति किम् ? अश्वयुक्, अश्वयुग् । युञ्ज इति किम् ? युजिञ् समाधौ । युजमापन्ना मुनयः । ( पदान्ते ऋत्विजो गत्वं वाच्यम्* ) ऋत्विक्, ऋत्विग् । तकारान्तो मरुत् शब्दः । मरुत्, मरुद् । मरुतौ । मरुद्भ्याम् । ऋकारानुबन्धो महत् शब्दः ।

## ऋदुदितः ॥ १२ ॥

ऋदित उदितश्च घुटि परे धुटः प्राग् नोऽन्तः स्यात् । पदस्येति तलोपे ।

## न्समहतोः ॥ १३ ॥

न्सन्तस्य महतश्च स्वरस्य शेषे घुटि परे दीर्घः स्यात् । महान् । महान्तौ । शेषघुटीत्येव । हे महन् । हे महान्तौ । हे महान्तः । महतः । शतृप्रत्ययान्तानां घुटि दीर्घाभावो विशेषः । पचन् । पचन्तौ । पचन्तः । हे पचन् । उकारानुबन्धो भवत् शब्दः ।

## अभ्वादेरत्वसः सौ ॥ १४ ॥

अत्वन्तस्यासन्तस्य च भ्वादिवर्जस्य शेषे सौ परे दीर्घः स्यात् । भवान् । भवन्तौ । भवन्तः । हे भवन् । मतुप्रत्ययान्ता अप्येवम् । गोमान् । गोमन्तौ । हे गोमन् । थकारान्तो दधिमथ्शब्दस्तस्य धुटस्तृतीय इति दत्वे । दधिमद्, दधिमत् ।

पूर्वपदस्थाद्वादेः परस्य कवर्गवत्येकस्वरवति चोत्तरपदे नो ण् स्यात् । न चेदसौ पक्वस्य । वृत्रहणौ ।

## हनो ह्नो घ्नः ॥ २३ ॥

हन्तेर्ह्नो घ्नः स्यात् ।

## हनो घि ॥ २४ ॥

हनो घकारे निमित्तनिमित्तिनोरन्तरे सति नो णो न स्यात् । वृत्रघ्नः । वृत्रघ्नि, वृत्रहणि । पूषा । पूषणौ । पूष्णि, पूषणि । अर्यमा । अर्यमणौ । अर्यम्णः । इत्यादि ।

## श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः २५

ङ्यां स्याद्यघुट्स्वरे च श्वनादीनां व उः स्यात् । श्वा । श्वानौ । श्वानः । हे श्वन् । शुनः । शुना । युवा । युवानौ । हे युवन् । यूनः । मघवा । मघवानौ । मघोनः । हे मघवन् । मघवच्छन्दस्तु मत्वन्तः । मघवान् ।

## पथिन्मथिन्ऋभुक्षः सौ ॥ २६ ॥

पथ्यादीनां नान्तानामन्तस्य सौ परे आः स्यात् । इति नकारस्य आत्वे ।

## एः ॥ २७ ॥

पथ्यादीनामिकारस्य घुटि परे आः स्यात् । पथा इति जाते ।

## थोन्थ् ॥ २८ ॥

पथिन्मथिनोर्नान्तयोस्थस्य घुटि परे न्थ् स्यात्। पन्थाः । पन्थानौ । पन्थानः । हे पन्थाः ।

## इन् ङीस्वरे लुक् ॥ २९ ॥

ङ्यामघुट्स्वरे च परे पथ्यादीनामिनो लुक् स्यात् । पथः । पथा । पथिभ्याम् । मन्थाः । मन्थानौ । मथः । ऋभुक्षाः । ऋभुक्षः । पञ्चन्प्रभृतयो बहुवचनान्ताः नान्ताः सङ्ख्याशब्दाः त्रिषु लिङ्गेषु सरूपाः । इति ष्ण इति जस्शस्लुपि । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः २ ।

## सङ्ख्यानां ष्र्णाम् ॥ ३० ॥

रषनान्तानां सङ्ख्यावाचिनां स्वसंबन्धिन आमो नाम् स्यात् । दीर्घो नाम्यतिसृचतसृषृ इति दीर्घे । नाम्नो नोऽनह्न इति नलोपे । पञ्चानाम् । स्वसंबन्धिन इत्येव । प्रियपञ्चाम् । पञ्चसु । प्रियपञ्चादयो राजन्वत् । एवं सप्तन्प्रभृतयः ।

## वाष्टन आः स्यादौ ॥ ३१ ॥

अष्टनः स्यादौ परे आ वा स्यात् ।

## अष्ट और्जस्शसोः ॥ ३२ ॥

अष्टनः कृतात्वस्य जस्–शसोरौः स्यात् । अष्टौ । अष्टौ । अष्ट । अष्ट । अष्टाभिः, अष्टभिः । अ-

दधिमथौ । दधिमत्सु । हे दधिमद्, हे दधिमत् । दकारान्तास्त्यदादयस्तेषामाद्वेर इत्यत्वे ।

लुगस्यादेत्यपदे ॥ १५ ॥

अपदादावकारे एकारे च परे अस्य लुक् स्यात् । त्य इति जाते ।

तः सौ सः ॥ १६ ॥

द्विशब्दान्तानां त्यदादीनां स्वसंबन्धिनि सौ परे तः सः स्यात् । स्यः । त्यौ । त्ये । इत्यादि सर्ववत् । स्वसंबन्धिनीति किम् ? प्रियत्यद् । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते ।

त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते॥१७॥

किञ्चिद्विधातुं कथितस्य पुनरन्यद्विधातुं कथनमन्वादेशस्तस्मिन् गम्यमाने द्वितीयाटौसि परे एतद् एनत् स्यात्, न तु वृत्त्यन्ते । आगत एषः । अथो एनं भोजय । एनं । एनौ । एनान् । एनेन । एतयोः, एनयोः । अन्वादेशाभावे । एतम् । एतौ । एतान् । वृत्त्यन्तेऽपि । परमैतं पश्य । इदमोऽप्येवम् । धकारान्तो धर्मबुधशब्दः ।

गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये ॥ १८ ॥

यस्य गडदबानां कोऽप्यादौ भवति चतुर्थश्चान्ते

भवति तस्यैकस्वरस्य शब्दावयवस्यादेश्चतुर्थः स्यात्, पदान्ते सादौ ध्वादौ च प्रत्यये परे । धर्मभुत्, धर्मभुद् । धर्मबुधौ । हे धर्मभुत् हे धर्मभुद् । धर्मभुद्भ्याम् । धर्मभुत्सु । नकारान्तो राजन् शब्दः । नि दीर्घ इति दीर्घे । राजा । राजानौ । राजानः । अघुट्स्वरेऽनोऽस्येत्यल्लोपे नस्य ञत्वे ज्ञोर्ज्ञः । राज्ञः । राज्ञा । राजभ्याम् । असदधिकारविहितस्य नलोपस्यासत्वाद्दीर्घाभावः । राज्ञे । राज्ञः । राज्ञः । राज्ञोः । राज्ञाम् । राज्ञि, राजनि । राजसु ।

**नामन्त्र्ये ॥ १९ ॥**

संबोधने नाम्नो नस्य लुग् न स्यात् । हे राजन् ।

**न वमन्तसंयोगात् ॥ २० ॥**

वान्तान्मान्ताच्च संयोगात्परस्यानोऽस्य लुग् न स्यात् । यज्वनः । यज्वना । आत्मनः । आत्मनि । शेषं राजन्वत् । एवं सुपर्वन्प्रभृतयः ।

**इन्हन्पूषार्यम्णः शिस्योः ॥ २१ ॥**

इन्नन्तस्य हनादीनां च शिस्योरेव दीर्घः स्यात् । नि दीर्घ इति दीर्घे सिद्धे नियमार्थोऽयं योगः । दण्डी । दण्डिनौ । दण्डिनः । दण्डिना । दण्डिभ्याम् । हे दण्डिन् । विन्प्रत्ययान्ता अप्येवम् । वचस्वी । वचस्विनौ २ । वृत्रहा ।

**कत्वर्गैकस्वरवति ॥ २२ ॥**

ष्टाभ्यः, अष्टभ्यः । अष्टानाम् । अष्टासु, अष्टसु, प्रियाष्टाः प्रियाष्टा । भकारान्तस्तुण्डिभ् शब्दः । गडदबादेरिति ढत्वे । तुण्ढिब्, तुण्ढिप् । तुण्डिभौ । मकारान्त इदम् शब्दः ।

## अयमियं पुंस्त्रियोः सौ ॥ ३३ ॥

पुंस्त्रीलिङ्गयोरिदंशब्दस्य स्वसंबन्धिनि सौ परे अयमियमौ स्याताम् । अयम् । स्वसंबन्धिनीति किम् ? प्रियेदम् ना स्त्री वा । द्विवचने आद्वेर इति मस्य अत्वे ।

## दो मः स्यादौ ॥ ३४ ॥

स्वस्यादौ परे इदमो दो मः स्यात् । इमौ । इमे । इमम् । इमौ । इमान् । अन्वादेशे एनत् । एनम् । एनौ । इत्यादि ।

## टौस्यनः ॥ ३५ ॥

स्वटौसोः परयोरनकस्य इदमोऽनः स्यात् । अनेन । स्व इत्येव । प्रियेदमा । अनक इत्येव । इमकेन ।

## अनक् ॥ ३६ ॥

व्यञ्जनादौ स्वस्यादौ परे अनकस्य इदमो अः स्यात् । आभ्याम् । इदमदसोरक्येव । स्व इति किम् ? प्रियेदम्भ्याम् । भिस ऐस् इति नियमादेद्बहु-

स्भोसीत्येत्वे । एभिः । अकि तु । इमकैः । अस्मै । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । एषु ।

## किमः कस्तसादौ च ॥ ३७ ॥

स्यादौ तसादौ परे किमः कः स्यात् । कः साकोऽपि । कः । कौ । के । सर्ववत् । चतुश्शब्दो बहुवचनान्तः ।

## वाः शेषे ॥ ३८ ॥

स्वेऽस्वे वा शेषे घुटि परेऽनडुच्चतुरोरुतो वाः स्यात् । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ । चतुर्णाम् ।

## अरोः सुपि रः ॥ ३९ ॥

रोरन्यस्य रस्य सुपि परे र एव स्यात् । चतुर्षु । प्रियचत्वाः । प्रियचत्वारौ २ ।

## उतोऽनडुच्चतुरो वः ॥ ४० ॥

संबोधने सौ । हे प्रियचत्वः । शकारान्तो विशशब्दः । यजसृजेति षत्वे । विड्, विट् । विशौ । विड्त्सु, विट्सु । तत्त्वप्राड्, तत्त्वप्राट् । तत्त्वप्राशौ २ ।

## ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृष्उष्णिहो गः ॥ ४१ ॥

एषां पदान्ते गः स्यात् । तादृग्, तादृक् । तादृ-

शौ २। तादृग्भ्याम् ३। सदृगादयोऽप्येवम्। घृत-स्पृक्, घृतस्पृग्। घृतस्पृशौ २। घृतस्पृग्भ्याम् ३।

## नशो वा ॥ ४२ ॥

नशः पदान्ते ग् वा स्यात्। जीवनग् जीव-नक्। जीवनड् जीवनट्। जीवनशौ २। जीवन-ग्भ्याम् जीवनड्भ्याम्। जीवनक्षु जीवनट्त्सु जीवनट्सु। पकारान्तो दधृप् शब्दः। दधृग् दधृक्। दधृपौ। दधृग्भ्याम्।

## सजुषः ॥ ४३ ॥

पदान्ते रुः स्यात्।

## पदान्ते ॥ ४४ ॥

पदान्तस्थयोर्र्वादेर्वोः परयोस्तस्यैव नामिनो दीर्घः स्यात्। सजूः। सजुषौ। हे सजूः। सजू-र्भ्याम्। सजूर्षु। षष्शब्दो नित्यं बहुवचनान्तः। षट् षड्। षण्णाम् षट्सु। प्रियषट् प्रियषड्। प्रियषषौ। सकारान्तः सुवचस् शब्दः। अभ्वा-देरत्वसः सौ इति दीर्घे सुवचाः। सुवचसौ २। सुवचोभ्याम् ३। सुवचस्सु। हे सुवचः। एवं सुमनस्प्रभृतयः।

## रात्सः ॥ ४५ ॥

पदस्य संयोगान्तस्य यो रस्ततः परस्य सस्यैव

लुक् स्यात् । चिकीर्षतीति चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु । हे चिकीः । उकारानुबन्धः श्रेयस्शब्दः । ऋदुदित इति नुमागमे । न्सम्महतो-रिति दीर्घे च । श्रेयान् ।

## शिड्हेऽनुस्वारः ॥ ४६ ॥

अपदान्तस्थानां न्मां शिटि हे च परेऽनुस्वारः स्यात् । श्रेयांसौ । हे श्रेयन् । श्रेयोभ्याम् । क्वसु-प्रत्ययान्ता अप्येवम् । विद्वान् । विद्वांसौ । हे विद्वन् ।

## क्वसुष्मतौ च ॥ ४७ ॥

णिक्यघुट्वर्जे यादौ स्वरादौ मतौ च क्वस् उष् स्यात् । विदुषः । विदुषा ।

## स्रंसुध्वंसुक्वसनडुहो दः ॥ ४८ ॥

स्रंसुध्वंसोः क्वसुप्रत्ययान्तस्यानडुहश्च पदान्ते दः स्यात् । विद्वद्भ्याम् । विद्वत्सु । उदित् पुंस्शब्दः ।

## पुंसोः पुमन्स् ॥ ४९ ॥

घुटि । पुमान् । पुमांसौ । हे पुमन् । पुंसा । पदस्येति सलोपे पुंभ्याम् । पुंसि । दोस्शब्दस्य स्वरादौ षत्वं व्यञ्जनादौ च रुत्वम् । दोः । दोषौ २ । हे दोः । शसादौ स्यादौ वा दोषन्नादेशे । दोष्णः दोषः । दोष्णा दोषा । दोर्भ्याम् दोषभ्याम् ३ ।

दोष्णि दोषणि दोषि । दोष्षु । उशनस्शब्दस्य ऋदुशनसिति सेर्डा । उशना । उशनसौ ।

वोशनसो नश्चामन्त्र्ये सौ ॥ ५० ॥

उशनसः संबोधने नलुकौ वा स्याताम् । हे उशनन् हे उशन हे उशनः । पुरुदंशा । पुरुदंशसौ । अनेहा । अनेहसौ । हे पुरुदंशः । हे अनेहः ।

अदसो दः सेस्तु डौ ॥ ५१ ॥

स्वसंबन्धिसौ परे अदसो दः सः स्यात् । सेस्तु डौ । असौ असकौ । हे असौ । स्वसंबन्धीति किम् । अत्यदाः ।

मोऽवर्णस्य ॥ ५२ ॥

अवर्णान्तस्यादसो दो म् स्यात् । अमौ इति जाते ।

मादुवर्णोऽनु ॥ ५३ ॥

अदसो मः परस्य वर्णस्य उवर्णः स्यात् । ह्रस्वस्थाने ह्रस्वो दीर्घस्थाने दीर्घः । अनु पश्चात्कार्यान्तरेभ्यः । अमू । सर्वादित्वाज्जस इः । अमे इति जाते ।

बहुष्वेरीः ॥ ५४ ॥

बहुवचनान्तस्यादस एरीः स्यात् । अमी । हे असौ । अमुम् । अमू । अमून् । अम टा इति स्थिते ।

## प्रागिनात् ॥ ५५ ॥

अदसो मः परस्य वर्णस्य इनादेशात्प्रागुवर्णः स्यात् । अमुना । अमूभ्याम् । इदमदसोऽक्येवेति नियमाद्भिस ऐस्त्वाभावे । एद्बहुस्भोसीत्येत्वे । बहुष्वेरीः । अमीभिः । अम सै इति जाते । मादुवर्णोऽनु । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमीषु ।

## असुको वाऽकि ॥ ५६ ॥

अदसोऽकि सत्यसुको वा स्यात् । असुकः असकौ । हे असुक । हे असकौ । अनडुह्शब्दस्य वाः शेषे अनड्वाहू इति जाते अनडुहः सौ, धुटां प्राग्नोऽन्तः, पदस्येति हलोपे । अनड्वान् । अनड्वाहौ २ । शसि अनडुहः । स्रंसुध्वंसित्यादिना दत्वे । अनडुद्भ्याम् ३ । संबोधने उतोऽनडुच्चतुरो वः । हे अनड्वन् ।

## हो धुट्पदान्ते ॥ ५७ ॥

धुटि प्रत्यये पदान्ते च हो ढः स्यात् । मधुलिट् मधुलिड् । मधुलिहौ । मधुलिड्भ्याम् २ । मधुलिट्सु मधुलिट्सु ।

## भ्वादेर्दादेर्घः ॥ ५८ ॥

भ्वादेर्धातोर्यो दादिरवयवस्तस्य धुटि परे प्रत्यये

पदान्ते च हो घः स्यात् । गडदबादेरिति घत्वे गोधुक् गोधुग् ।

## मुहद्रुहस्नुहस्निहो वा ॥ ५९ ॥

धुटि प्रत्यये पदान्ते त्वेषां चतुर्णां हो घ् वा स्यात् । तत्त्वमुग् तत्त्वमुक् । तत्त्वमुड् तत्त्वमुट् । संबोधने चातूरूप्यम् ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां व्यञ्जनान्ताः पुंलिङ्गाः ।

---

## अथ व्यञ्जनान्ताः स्त्रीलिङ्गाः ॥

तत्र चकारान्तादयः प्राग्वत् । त्यदादीनामाद्वेर इत्यकारान्तत्वे ।

## आत् ॥ १ ॥

अकारान्तान्नाम्नः स्त्रियामाप्स्यात् । तः सा सः । स्या । त्ये । त्याः । सर्वावत् । सा । ते । ताः । या । ये । याः । एषा । एते । एताः । एताम् । एते । एताः । एतया । एतयोः २ । अन्वादेशे । एनाम् एने । एनाः । एनया । एनयोः २ । पकारान्तो बहुवचनान्तोऽप्शब्दः ।

## अपः ॥ २ ॥

अपः स्वरस्य शेषे घुटि दीर्घः स्यात् । आपः । शसि । अपः ।

## अपोऽद्भे ॥ ३ ॥

भादौ स्यादौ परे अपोऽद् स्यात् । अद्भिः । अद्भ्यः २ । अपाम् । अप्सु । एवं स्वाप् । स्वापौ । स्वद्भ्याम् । ककुभ्शब्दस्तुण्डिभ्शब्दवत् । इदम्-शब्दस्य अयमियं पुंस्त्रियोः सौ । इयम् । इमे । इमाः । इमाम् । इमे । इमाः । टौस्यनः । अनया। अनक् । आभ्याम् । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसाम् । अस्याम् । आसु । रेफान्त-श्चतुर्शब्दः ।

## त्रिचतुरस्तिसृचतसृ स्यादौ ॥ ४ ॥

स्वेऽस्वे वा स्यादौ परे स्त्रीलिङ्गयोस्त्रिचतुरो-स्तिसृ चतसृ स्याताम् ।

## ऋतो रः स्वरेऽनि ॥ ५ ॥

तिसृचतसृशब्दयोर्ऋतः स्वेऽस्वे वा स्वरादौ स्यादौ परे रः स्यात् नविषयादन्यत्र । चतस्रः २ । चतसृभिः । चतसृभ्यः । दीर्घो नामीत्यत्र तिसृच-तसृवर्जनात् चतसृणाम् । चतसृषु । हे चतस्रः । एवं तिस्रः २ । तिसृभिः । तिसृभ्यः तिसृणाम् । तिसृषु । हे तिस्रः । स्वेऽस्वे इति । प्रियतिसा प्रियचतसा ना । प्रियतिस्रौ प्रियचतस्रौ । गिर्श-ब्दस्य पदान्ते इति दीर्घे । गीः । गिरौ २ । गीर्भ्याम् ३ । अरोः सुपि रः । गीर्षु । हे गीः ।

## दिव औः सौ ॥ ६ ॥

द्यौः । दिवौ ।

## उः पदान्तेऽनूत् ॥ ७ ॥

पदान्ते दिव उः स्यात् स च दीर्घो न स्यात् । द्युभ्याम् । द्युषु । हे द्यौः । ऋत्विगित्यादिना गत्वे दिग् दिक् । दिशौ २ । दिग्भ्याम् २ । हे दिग् हे दिक् । आशिस्शब्दस्य सोरुरिति रुत्वे पदान्ते इति दीर्घे आशीः । आशिषौ । आशीर्भ्याम् २ । आशीर्षु । हे आशीः । अदसो दः सेस्तुडौ । असौ । द्विवचनादौ अत्वे मत्वे (पदान्ते नहो धो वाच्यः*) उपानत् उपानद् । उपानहौ । उपानद्भ्याम् । उपानत्सु । हे उपानद् हे उपानत् ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय गणिविरचितायां हैमलघुप्रक्रियायां व्यञ्जनान्ता स्त्रीलिङ्गाः ।

---

## अथ व्यञ्जनान्ता नपुंसकलिङ्गाः ॥

चकारान्तः प्रत्यच्शब्दः । प्रत्यक् प्रत्यग् । अच्च् प्राग् दीर्घश्चेति प्रतीची । प्रत्यञ्चि । सम्यक् सम्यग् । समीची । सम्यञ्चि । शेषं पुंवत् । जकारान्तोऽसृज्शब्दः । असृग् असृक् । असृजी २ । असृञ्जि । शसादौ वाऽसन्नादेशे असानि । अस्ना । असृजा । असभ्याम् । असृग्भ्याम् । हे असृग् हे

असृक् । जगत् जगद् । जगती । जगन्ति । महत् । महती । न्समहतोरिति दीर्घे । महान्ति । ( यकृत्शकृतोः शसादौ वा यकन्शकन्नादेशे ) । यक्ना यकृता । यकभ्याम् यकृद्भ्याम् । शक्ना शकृता । शकभ्याम् शकृद्भ्याम् । त्यदादीनामनतोलुबिति सिलुप् त्यद् । द्विवचनादौ अत्वे त्ये । त्यानि । सर्ववत् । एवं तद्यदादयः । अहन्शब्दस्य अह्न इति रुत्वे । अहः २ । ईङौ वा । अह्नी अहनी २ । अहानि । अह्ना । अहोभ्याम् ३ । अहस्सु । हे अहः । ब्रह्मन्शब्दस्य नाम्नो नोऽनह्नः इति नलुपि । ब्रह्म । ब्रह्मणी । ब्रह्माणि । ब्रह्मणा ।

## क्लीबे वा ॥ १ ॥

आमन्त्र्यस्य नाम्नो नस्य क्लीबे लुग् वा स्यात् । हे ब्रह्मन् हे ब्रह्म । इदम् । इमे । इमानि । किम् । के । कानि । चतुरः शौ । चत्वारि । पयः । पयसी । पयांसि । पयसा । पयोभ्याम् । हे पयः । एवं वचःप्रभृतयः । अदः । द्विवचने । अमे इति जाते । मादुवर्णोऽनु । अमू । अमूनि । शेषं पुंवत् । काष्ठतड् काष्ठतट् । काष्ठतक्षी । काष्ठतक्षि ।

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां व्यञ्जनान्ता नपुंसकलिङ्गाः ।

[ इति षड्लिङ्गानि समाप्तानि ]

## अथ युष्मदस्मदोः प्रक्रिया ॥

तयोश्च त्रिष्वपि लिङ्गेषु समानं रूपमलिङ्गत्वात्।

### त्वमहं सिना प्राक्चाऽकः ॥ १ ॥

सिना युष्मदस्मदोस्त्वमहमौ स्याताम् तौ चाक्-प्रसङ्गेऽकः प्रागेव । त्वम् । अहम् । त्वकम्। अहकम् ।

### मन्तस्य युवावौ द्वयोः ॥ २ ॥

द्वित्वे वर्तमानयोर्युष्मदस्मदोर्मन्तावयवस्य स्यादौ परे युवावौ स्याताम् । युवद् । आवद् । इति तावद्भवति ।

### अमौ मः ॥ ३ ॥

युष्मदस्मद्भ्यां परयोरम् औ इत्येतयोर्मः स्यात्।

### युष्मदस्मदोः ॥ ४ ॥

व्यञ्जनादौ स्यादौ परे युष्मदस्मदोराः स्यात्। युवाम् । आवाम् ।

### यूयं वयं जसा ॥ ५ ॥

जसा सह युष्मदस्मदोरेतौ स्याताम् । यूयम् । वयम् । द्वितीयैकवचने ।

### त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥ ६ ॥

स्यादौ प्रत्ययोत्तरपदयोश्च परयोरेकत्वे वर्तमानयोर्युष्मदस्मदोर्मान्तावयवस्य त्वमौ स्याताम् ।

लुगस्यादेत्यपदे इत्यकारलोपे अमो मत्वे दस्यात्वे च त्वाम् माम् । युवाम् आवाम् ।

शसो नः ॥ ७ ॥

युष्मदस्मद्भ्यां परस्य शसो नः स्यात् । युष्मान् अस्मान् । टायां त्वमादेशे ।

टाङ्योसि यः ॥ ८ ॥

एषु चतुर्षु युष्मदस्मदोर्यः स्यात् । त्वया मया । युवाभ्याम् आवाभ्याम् । युष्माभिः अस्माभिः ।

तुभ्यं मह्यं ङ्या ॥ ९ ॥

ङ्या सह युष्मदस्मदोरेतौ स्याताम् । तुभ्यम् मह्यम् ।

अभ्यं भ्यसः ॥ १० ॥

युष्मदस्मद्भ्यां परस्य चतुर्थीभ्यसोऽभ्यम् स्यात् । अकारो व्यञ्जनादित्वव्यावृत्त्यर्थस्तेन युष्मदस्मदोरित्यात्वं न भवति ।

शेषे लुक् ॥ ११ ॥

यस्मिन्नायौ कृतौ ततोऽन्यः शेषस्तस्मिन् स्यादौ परे युष्मदस्मदोर्लुक् स्यात् । युष्मभ्यम् अस्मभ्यम् ।

ङसेश्चाद् ॥ १२ ॥

युष्मदस्मद्भ्यां परस्य ङसेः पञ्चमीभ्यसश्च अद् स्यात् । अकारः प्राग्वत् । त्वत् मत् । युष्मद् अस्मद् ।

### तव मम ङसा ॥ १३ ॥

ङसा सह युष्मदस्मदोरेतौ स्याताम् । तव । मम । युवावादेशे टाङ्योसीति ये । युवयोः आवयोः ।

### आम आकम् ॥ १४ ॥

युष्मदस्मद्भ्यां परस्य आम आकम् स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु अस्मासु । अथानयोरादेशविशेषाः ।

### पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे ॥ १५ ॥

द्वितीयाचतुर्थीषष्ठीबहुवचनैः सह पदात्परयोर्युष्मदस्मदोर्वस्नसौ वा स्याताम् नतु वाक्यान्तरे ।

धर्मो रक्षतु वो लोका धर्मो रक्षतु नः सदा ।
नमो वः श्रीजिनाः शुद्धं ज्ञानं नो दीयता धनम् ॥ १ ॥
दर्शनं वो जिनाधीशाः पापं हरति नो रयात् ।
पक्षे । धर्मो युष्मान् रक्षतु इत्यादि ।

### द्वित्वे वाम्नौ ॥ १६ ॥

सप्तविभक्तिद्विवचनैः सह पदात्परयोर्युष्मदस्मदोर्वाम्नौ वा स्याताम् ।

पातु वां नौ जिनोऽयं च दद्याद्वां नौ परं पदम् ।

मनो वां नौ सदा भूयादृढं धर्मे जिनोदिते २ ।
पक्षे जिनो युवां पात्वित्यादि ।

## अमा त्वामा ॥ १७ ॥

अमा सह पदात्परयोर्युष्मदस्मदोस्त्वामा वा स्याताम् । धर्मस्त्वा पातु । त्वां पातु । धर्मो मा पातु । मां पातु ।

## ङेङसा तेमे ॥ १८ ॥

ङेङस्भ्यां सह पदात्परयोर्युष्मदस्मदोस्तेमे वा स्याताम् । धर्मस्ते ददातु । धर्मो मे ददातु । मह्यं ददातु सुखम् । धर्मस्ते स्वम् । तव स्वम् । धर्मो मे स्वं । मम स्वम् ।

## नित्यमन्वादेशे वस्नसादिः ॥ १९ ॥

यूयं विनीतास्तद्वो गुरवो मानयन्ति ।

## असदिवामन्त्र्यं पूर्वम् ॥ २० ॥

युष्मदस्मद्भ्यां पूर्वं संबोधनमसदिव स्यात् ततो वस्नसादयो न स्युः । जना युष्मान्पातु धर्मः । क्वचिद्वा । जिनाः शरण्या वो युष्मान् वा सेवे । क्वचिन्न । साधो सुविहित त्वा सेवे ।

## पादाद्योः ॥ २१ ॥

नियतमात्राऽक्षरपिण्डः पादः । पादस्याऽऽदिस्थयोर्युष्मदस्मदोर्वस्नसादिर्न स्यात् । वीरो विश्वे-

## तव मम ङसा ॥ १३ ॥

ङसा सह युष्मदस्मदोरेतौ स्याताम् । तव । मम । युवावादेशे टाङ्योसीति ये । युवयोः आवयोः ।

## आम आकम् ॥ १४ ॥

युष्मदस्मद्भ्यां परस्य आम आकम् स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु अस्मासु । अथानयोरादेशविशेषाः ।

## पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे ॥ १५ ॥

द्वितीयाचतुर्थीषष्ठीबहुवचनैः सह पदात्परयोर्युष्मदस्मदोर्वस्नसौ वा स्याताम् नतु वाक्यान्तरे।

धर्मो रक्षतु वो लोका धर्मो रक्षतु नः सदा ।
नमो वः श्रीजिनाः शुद्धं ज्ञानं नो दीयतां धनम् ॥ १ ॥
दर्शनं वो जिनाधीशाः पापं हरति नो रयात् ।
पक्षे । धर्मो युष्मान् रक्षतु इत्यादि ।

## द्वित्वे वाम्नौ ॥ १६ ॥

समविभक्तिद्विवचनैः सह पदात्परयोर्युष्मदस्मदोर्वाम्नौ वा स्याताम् ।

पातु वां नौ जिनोऽयं च दद्याद्वां नौ परं पदम् ।

**बहुगणभेदे ॥ २० ॥**

तथा बहुधा । (विचाले चः) द्विधा । एकधा ।

**वैकाद् ध्यमञ् ॥ २१ ॥**

ऐकध्यम् । एकधा ।

**द्वित्रेर्धमञेधौ वा ॥ २२ ॥**

द्वित्रिभ्यां प्रकारादिष्वेतौ वा स्याताम् । द्वैधम् त्रैधम् । द्वेधा त्रेधा । द्विधा त्रिधा । इति ।

**वारे कृत्वस् ॥ २३ ॥**

संख्यायाः । पञ्चकृत्वः ।

**द्वित्रिचतुरः सुच् ॥ २४ ॥**

वारे । द्विस्त्रिश्चतुर्वा भुङ्क्ते ।

**एकात्सकृच्चास्य ॥ २५ ॥**

एकवारं भुङ्क्ते । सकृद्भुङ्क्ते ।

**ऊर्ध्वाद्रिरिष्टातावुपश्चास्य ॥ २६ ॥**

ऊर्ध्वाद्दिग्देशकालार्थात्प्रथमापञ्चमीसप्तम्यन्तादेतौ स्याताम् उपश्चास्यादेशः स्यात् । उपरि उपरिष्टात् रम्यं आगतो वासो वा ।

**पूर्वावराधरेभ्योऽसऽस्तातौ पुरवधश्चैषाम् ॥ २७ ॥**

प्रथमापञ्चमीसप्तम्यन्तानाम् । पुरः पुरस्तात् । अवः अवस्तात् । अधः अधस्तात् रम्यं आगतो वासो वा ।

श्वरो देवो युष्माकं कुलदेवता । स एव नाथो भगवान् अस्माकं पापनाशनः ॥ १ ॥

चाहहवैवयोगे ॥ २२ ॥

एभिः पञ्चभिर्योगे वस्नसादिर्न स्यात् । ज्ञानं युष्माँश्च रक्षतु ।

इति श्रीमहोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां युष्मदस्मदोः प्रक्रिया समाप्ता ॥

---

अथाव्ययानि ॥

अव्ययानि त्वलिङ्गान्यसङ्ख्यानि च । तथाहुः ।

नन्ता सङ्ख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः ।
पदं वाक्यमव्ययं चेत्यसङ्ख्यं च तद्बहुलम् ॥१॥
सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ २ ॥

स्वरादयोऽव्ययम् ॥ १ ॥

स्वर् अन्तर् प्रातर् पुनर् इत्यादि ।

चादयोऽसत्त्वे ॥ २ ॥

अद्रव्यार्थाश्चादयोऽव्ययानि स्युः । च अह ह एव वा एवम् नूनम् ननु खलु विना नाना ईषत् किल वै नो न मा मा स्म यत् तत् स्वराश्च ।

अधण्तस्वाद्याशसः ॥ ३ ॥

धण्वर्जास्तस्वादयः शसर्यन्ता ये प्रत्ययास्तदन्तं नामाव्ययं स्यात् ।

### व्याश्रये तसुः ॥ ४ ॥

पष्ठ्यन्तात्पक्षाश्रये गम्ये तसुः स्यात् । रविः कर्णतोऽभवत् ।

### पर्यभेस्तसुः ॥ ५ ॥

परितः । अभितः ।

### अहीयरुहोऽपादाने ॥ ६ ॥

अपादानपञ्चम्यास्तसुर्वा स्यात् । ग्रामतो ग्रामात् । हीयरुहोस्तु न । सार्थाद्धीनः । गिरेरवरोहति ।

### किमद्व्यादिसर्वाद्यवैपुल्यबहोः पित्तस् ॥७॥

किमो द्व्यादिवर्जसर्वादिभ्योऽवैपुल्यार्थबहोश्च पञ्चम्यन्तात्पित्तस् स्यात् । सर्वतः । बहुतः ।

### इतोऽतः कुतः ॥ ८ ॥

एते तसन्ताः साधवः ।

### सप्तम्याः ॥ ९ ॥

सप्तम्यन्तात्किमादेस्त्रप् । सर्वत्र । बहुत्र । क कुत्र । अत्र । इह । एते त्रबन्ताः साधवः ।

### अनद्यतनेर्हिः ॥ १० ॥

ङ्यन्तादनद्यतनकाले यथासंभवं किमादेर्हिः स्यात् । कर्हि । यर्हि । बहुर्हि ।

### प्रकारे था ॥ ११ ॥

यथासंभवं स्याद्यन्तात्किमादेः प्रकारे था स्यात् । सर्वथा ।

कथमित्थम् ॥ १२ ॥

एतौ प्रकारे साधू ।

किंयत्तत्सर्वैकान्यात्काले दा ॥ १३ ॥

कदा यदा तदा सर्वदा एकदा अन्यदा । सदा अधुना इदानीम् तदानीम् एतर्हि एते काले साधवः ।

सद्योऽद्यपरेद्यव्यह्नि ॥ १४ ॥

एतेऽह्नि काले साधवः ।

पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस् ॥ १५ ॥

ङ्यन्तेभ्यः सप्तभ्य एभ्योऽह्नि काले एद्युस् । पूर्वेद्युः ।

उभयाद् द्युश्च ॥ १६ ॥

उभयद्युः । चादेद्युस् उभयेद्युः ।

ऐषमः परुत् परारि वर्षे ॥ १७ ॥

पूर्वस्मिन्वर्षे परुत् । पूर्वतरे वर्षे परारि ।

सङ्ख्याया धा ॥ १८ ॥

प्रकारे । एकधा ।

डत्यतु सङ्ख्यावत् ॥ १९ ॥

डत्यन्तमत्वन्तं च सङ्ख्यावत्स्यात् । कतिधा यावद्धा ।

**वहुगणभभेदे ॥ २० ॥**

तथा वहुधा । (विचाले च*) द्विधा । एकधा ।

**वैकाद् ध्यमञ् ॥ २१ ॥**

ऐकध्यम् । एकधा ।

**द्वित्र्योर्धमञेधौ वा ॥ २२ ॥**

द्वित्रिभ्यां प्रकारादिष्वेतौ वा स्याताम् । द्वैधम् त्रैधम् । द्वेधा त्रेधा । द्विधा त्रिधा । इति ।

**वारे कृत्वस् ॥ २३ ॥**

संख्यायाः । पञ्चकृत्वः ।

**द्वित्रिचतुरः सुच् ॥ २४ ॥**

वारे । द्विस्त्रिश्चतुर्वा भुङ्क्ते ।

**एकात्सकृच्चास्य ॥ २५ ॥**

एकवारं भुङ्क्ते । सकृद्भुङ्क्ते ।

**ऊर्ध्वाद्रिरिष्टातावुपश्चास्य ॥ २६ ॥**

ऊर्ध्वाद्दिग्देशकालार्थात्प्रथमापञ्चमीसप्तम्यन्तादेतौ स्याताम् उपश्चास्यादेशः स्यात् । उपरि उपरिष्टात् रम्यं आगतो वासो वा ।

**पूर्वावराधरेभ्योऽसऽस्तातौ पुरवधश्चैषाम् ॥ २७ ॥**

प्रथमापञ्चमीसप्तम्यन्तानाम् । पुरः पुरस्तात् । अवः अवस्तात् । अधः अधस्तात् रम्यं आगतो वासो वा ।

परावरात्स्तात् ॥ २८ ॥

परस्तात् अवरस्तात् रम्यं आगतो वासो वा।

दक्षिणोत्तरपरावरेभ्योऽतस् ॥ २९ ॥

दक्षिणतो रम्यं आगतो वासो वा।

अधरापरदक्षिणोत्तरेभ्य आत् ॥ ३० ॥

अधरात् रम्यं आगतो वासो वा।

वा दक्षिणात्प्रथमासप्तम्या आ ॥ ३१ ॥

दक्षिणा रम्यं वासो वा।

आही दूरे ॥ ३२ ॥

दूरदिग्देशार्थात्प्रथमासप्तम्यन्ताद्दक्षिणादा आहिश्च। गिरेर्दक्षिणा दक्षिणाहि रम्यं वासो वा।

वोत्तरात् ॥ ३३ ॥

उत्तरा उत्तराहि उत्तरतः उत्तरात् रम्यं वासो वा॥

अदूरे एनः ॥ ३४ ॥

दिक्शब्दात्प्रथमासप्तम्यन्ताददूरे एनः स्यात्। पूर्वेणास्य रम्यं वासो वा (दिक्शब्दाद्दिग्देशकालार्थात्प्रथमापञ्चमीसप्तम्यन्तात्स्वार्थे धा स्यात्*)

लुबञ्चेः ॥ ३५ ॥

अञ्चत्यन्ताद्दिक्शब्दाद्विहितयोर्धेनयोर्लुप् स्यात्। तल्लुपि च स्त्रीप्रत्ययस्यापि लुप् भवति। प्राची

दिक् । प्राङ् देशः कालो वा रम्यः । प्राग्रम्यम् । एवमागतो वासो वा ।

## पश्चोऽपरस्य दिक्पूर्वस्य चाति ॥ ३६ ॥

अपरा दिक् पश्चात् । दक्षिणपश्चात् । ( वोत्तरपदेऽर्धे* ) पश्चार्धम् । अपरार्धम् ।

## व्याप्तौ स्सात् ॥ ३७ ॥

कृभ्वस्तिभ्यां कर्मकर्तृभ्यां योगे प्रागतत्त्वे सादिः सात्स्यात् व्याप्तौ गम्यायाम् । द्विःसकारपाठान्नास्य षत्वम् । अग्निसात्करोति काष्ठम्, भवति स्यात् वा ।

## तत्राधीने ॥ ३८ ॥

सप्तम्यन्तादधीनेऽर्थे कृभ्वस्तिसंपद्योगे सात्स्यात् । ( देयेऽधीने च त्रा* ) राज्ञि अधीनं राजसात्करोति । देवत्राकरोति द्रव्यम् । भवति स्यात् संपद्यते वा ।

## सङ्ख्यैकार्थाद्वीप्सायां शस् ॥ ३९ ॥

सङ्ख्यार्थैकार्थाभ्यां वीप्सायां द्योत्यायां शस् वा स्यात् । एकैकमेकशो वा दत्ते । माषं माषं माषशो वा देहि ।

## तद्वति धण् ॥ ४० ॥

द्वित्रिभ्यां प्रकारवति धण् । द्वौ प्रकारावेषां द्वैधाः । धण्वर्जनात्तस्य नाव्ययत्वम् ।

## विभक्तिथमन्ततसाद्याभाः ॥ ४१ ॥

विभक्त्यन्ताभास्थमवसानतसादिप्रत्ययान्ताभाश्चाव्ययानि स्युः। चिराय चिरात्।
भवतु। अस्तु। कुतः। कथम्।

## वत्तस्याम् ॥ ४२ ॥

एतदन्तमव्ययम्।

## स्यादेरिवे ॥ ४३ ॥

स्याद्यन्तादिवार्थे क्रियासादृश्ये वत्स्यात्। अश्व इव अश्ववत्। मैत्रवद्याति चैत्रः। देवमिव देववत्पश्यन्ति मुनिम्। षष्ठीसप्तम्यन्तयोः सादृश्ये वत्। चैत्रस्येव चैत्रवन्मैत्रस्य मुखम्। मुक्ताविव मुक्तिवच्छान्तौ सुखम्।

## तसिः ॥ ४४ ॥

टान्तात्तुल्यदिश्ये तसिः स्यात्। सुदाम्नैकदिक् सुदामतो मेघः। आम् वक्ष्यते।

## क्त्वातुमम् ॥ ४५ ॥

एतदन्तमव्ययम्। कृत्वा। कर्तुं। यावज्जीवम्। प्रत्ययार्थेते वक्ष्यन्ते।

## गतिः ॥ ४६ ॥

गतिसंज्ञमव्ययं स्यात्।

## ऊर्याद्यनुकरणच्विडाचश्च गतिः ॥ ४७ ॥

एते उपसर्गाश्च गतयः स्युस्ते च प्राग्धातोः प्रयोज्याः । ऊरीकृत्य । उररीकृत्य । खाट्कृत्य ।

## कृभ्वस्तिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः ॥ ४८ ॥

कर्मार्थात् कृगायोगे कर्त्रर्थाच्च भ्वस्तियोगे प्रागभूततद्भावे च्विः स्यात् ।

## ईश्चाववर्णस्यानव्ययस्य ॥ ४९ ॥

अनव्ययस्यावर्णान्तस्य च्वावीः स्यात् । अशुक्लं शुक्लं करोति शुक्लीकरोति पटम् । मालीकरोति पुष्पाणि । अशुक्लः शुक्लो भवति शुक्लीभवति । शुक्लीस्यात् ।

## दीर्घश्च्वियङ्यक्येषु च ॥ ५० ॥

एषु चतुर्षु यादावाशिषि च स्वरस्य दीर्घः स्यात् । शुचीकरोति ।

( अरुर्मनश्चक्षुश्चेतोरहोरजसां लुक् च्वौ* ) अरूकरोति । उन्मनीस्यात् । ( इसुसोर्बहुलं लुक्* ) सर्पीकरोति नवनीतम् । धनूस्याद्वंशः । ( व्यञ्जनान्तस्यान्त ईर्बहुलम्* ) दृषदीभवति दृषद्भवति शिला ।

## समयादिभ्योऽर्थविशेषे कृग्योगे यथायोगं डाज्वाच्यः ॥ ५१ ॥

कालक्षेपे। समयाकरोति। अद्य श्वो वा पटं दास्यामीति कालक्षेपं करोति कुविन्दः। अतिपीडने सपत्राकरोति। निष्पत्राकरोति मृगम्। निष्कोषणे। निष्कुलाकरोति दाडिमम्। आनुकूल्ये। सुखाकरोति प्रियाकरोति गुरुम्। प्रातिकूल्ये। दुःखाकरोति शत्रुम्। पाके। शूलाकरोति मांसम्। वपने। मद्राकरोति भद्राकरोति बालं नापितः। एवं क्षेत्रकर्षणे द्वितीयाकरोति क्षेत्रम्। पटपटाकरोतीत्यादि।

प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः। उप आङिति विंशतिरेष सखे ७५ ., कथितः कविभिः॥ १॥

अव्ययानां स्यादेर्लुप् स्यात् । स्वः प्रातरस्ति पश्य कृतमिति ।

इति श्रीमहोपाध्यायश्रीकीर्तिविनयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां अव्ययानि समाप्तानि ।

---

## ॥ अथ स्त्रीप्रत्ययाः ॥

अथ लिङ्गविशेषज्ञानाय स्त्रीप्रत्ययाः प्रस्तूयन्ते ।

### अजादेः ॥ १ ॥

एभ्यः स्त्रियामाप् स्यात् । अजा एडका कोकिला बाला शूद्रा ज्येष्ठा ।

### अस्यायत्तत्क्षिपकादीनाम् ॥ २ ॥

आबेव परो यस्मात्तस्मिन्ननित्कि यदादिवर्जस्यात इत्स्यात् । पाचिका कारिका मद्रिका । यदादिवर्जनाद्यका सका क्षिपकेत्यादौ नेत्वम् ।

### क्वचिद्वा ॥ ३ ॥

अनित्कि परे क्वचिदापः स्थाने इह्रस्वौ वा । खट्विका खट्वाका खट्वका । क्वचिन्नेत्वम् । तारका ज्योतिः ।

### स्त्रियां नृतोऽस्वस्रादेर्डीः ॥ ४ ॥

स्वस्रादिवर्जान्नान्तादृदन्ताच्च स्त्रियां डीः स्यात् । राज्ञी कर्त्री ।

### अधातूदृदितः ॥ ५ ॥

कालक्षेपे । समयाकरोति । अद्य श्वो वा पट दास्यामीति कालक्षेपं करोति कुविन्दः । अतिपीडने सपत्राकरोति । निष्पत्राकरोति मृगम् । निष्कोषणे । निष्कुलाकरोति दाडिमम् । आनुकूल्ये । सुखाकरोति प्रियाकरोति गुरुम् । प्रातिकूल्ये । दुःखाकरोति शत्रुम् । पाके । शूलाकरोति मांसम् । वपने । मद्राकरोति भद्राकरोति बालं नापितः । एवं क्षेत्रकर्षणे द्वितीयाकरोति क्षेत्रम् । पटपटाकरोतीत्यादि ।

प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गः कथितः कविभिः ॥ १ ॥

एते ह्येकत्र धातावा पञ्चभ्यः प्रयोज्याः । प्र... भिव्याहरतीति । एवं (भूषादरक्षेपेऽलंसदसत् गतिसंज्ञम्*) अलंकृत्य । सत्कृत्य । असत्कृत्य । (कणे मनस्तृप्तौ*) कणेहत्य । मनोहत्य । (तिरोऽन्तर्धौ*) तिरोभूय । (कृगो नवा*) तिरस्कृत्य तिरस्कृत्वा । मध्येकृत्य मध्येकृत्वा । साक्षात्कृत्य साक्षात्कृत्वा । (नित्यं हस्ते पाणावुद्वाहे*) हस्तेकृत्य । पाणौकृत्येत्यादयो यथायोगं गतिसंज्ञा ज्ञेयाः । इत्यपरिमिता अव्ययाः ।

अव्ययस्य ॥ ५२ ॥

अव्ययानां स्यादेर्लुप् स्यात् । स्वः प्रातरस्ति पश्य कृतमिति ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां अव्ययानि समाप्तानि ।

---

## ॥ अथ स्त्रीप्रत्ययाः ॥

अथ लिङ्गविशेषज्ञानाय स्त्रीप्रत्ययाः प्रस्तूयन्ते ।

### अजादेः ॥ १ ॥

एभ्यः स्त्रियामाप् स्यात् । अजा एडका कोकिला बाला शूद्रा ज्येष्ठा ।

### अस्यायत्तत्क्षिपकादीनाम् ॥ २ ॥

आवेव परो यस्मात्तस्मिन्ननिकि यदादिवर्जस्यात इत्स्यात् । पाचिका कारिका मद्रिका । यदादिवर्जनाद्यका सका क्षिपकेत्यादौ नेत्त्वम् ।

### क्वचिद्वा ॥ ३ ॥

अनिकि परे क्वचिदापः स्थाने इह्रस्वौ वा । खट्टिका खट्वाका खट्वका । क्वचिन्नेत्त्वम् । तारका ज्योतिः ।

### स्त्रियां नृतोऽस्वस्रादेर्ङीः ॥ ४ ॥

स्वस्रादिवर्जान्नान्तादृदन्ताच्च स्त्रियां ङीः स्यात् । राज्ञी कर्त्री ।

### अधातूदृदितः ॥ ५ ॥

अधातोरुदित ऋदितश्च स्त्रियां ङीः स्यात्। भवन्ती पचन्ती।

अञ्चः ॥ ६ ॥

अञ्चन्तात् स्त्रियां ङीः स्यात्। प्राची उदीची।

गौरादिभ्यो मुख्याद्ङीः ॥ ७ ॥

मुख्याद्गौरादिगणात् स्त्रियां ङीः स्यात्।

अस्य ङ्यां लुक् ॥ ८ ॥

स्पष्टम्। गौरी नदी। (क्वचिद्यकारस्यापि*) मत्सी।

वयस्यनन्त्ये ॥ ९ ॥

अचरमे वयस्यदन्तात्स्त्रियां ङीः स्यात्। कुमारी किशोरी वधूटी। अनन्त्य इति किम्। वृद्धा। (क्वचिन्नाम्नि ङीः*) केवली। मामकी (नवा शोणादेः*) शोणी शोणा।

इतोऽक्त्यर्थात् ॥ १० ॥

क्त्यर्थप्रत्ययान्तवर्जादिदन्तात्स्त्रियां ङीर्वा स्यात्। भूमी भूमिः। धूली धूलिः। राजी राजिः। (पद्धतेर्वा*) पद्धती पद्धतिः। (शक्तेः शस्त्रे*) शक्ती शक्तिः।

स्वरादुतो गुणादखरोः ॥ ११ ॥

स्वरात्परो य उत्तदन्ताद्गुणवचनात्खरुवर्जना-

स्त्रियां ङीर्वा स्यात् । पट्वी पटुः । विभ्वी विभुः । स्वरादिति किम् । पाण्डुर्भूः । गुणादिति किम् । आखुः स्त्री । उत इति किम् । श्वेता पटी । अखरोरिति किम् । खरुरियम् ।

सत्त्वे निविशतेऽपैति पृथक् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥

## श्येतादिभ्यो वा ङीस्तद्योगे तोनूच ॥ १२ ॥

श्येनी श्येता । (क्नः पलितासितात्*) पलिक्नी । असिक्नी ।

## असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः ॥ १३ ॥

सहादिवर्जं पूर्वपदं यस्य ततः क्रोडादिवर्जाददन्तात्स्वाङ्गात्स्त्रियां ङीर्वा स्यात् । पीनस्तनी पीनस्तना । अतिकेशी अतिकेशा माला । सहादिवर्जनात् सहकेशा अकेशा विद्यमानकेशा । अक्रोडादिभ्य इति किम् । सुक्रोडा सुवाला । स्वाङ्गादिति किम् । वहुशोफा सुज्ञाना ।

अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ २ ॥

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥ १४ ॥

सहादिवर्जपूर्वपदेभ्यः एभ्यः स्वाङ्गेभ्यः स्त्रियां ङीर्वा स्यात्। सुनासिकी सुनासिका। नियमसूत्रमिदम्। तेनान्येभ्यो बहुस्वरेभ्यः संयोगोपान्तेभ्यश्च ङीर्न स्यात्। सुललाटा। सुपार्श्वा। (नखमुखादनाम्नि वा*) सुनखी सुनखा। सुमुखी सुमुखा। नाम्नि तु शूर्पणखा। (पुच्छात्तथा*) दीर्घपुच्छी। दीर्घपुच्छा। (कवरादिपूर्वान्नित्यम्*) कवरपुच्छी। (क्रीतात्करणादेः*) अश्वक्रीती। (क्तादल्पे*) अभ्रविलिप्ती द्यौरित्यादि। (सपत्न्यादौ ङीर्नोऽन्तादेशश्च*) सपत्नी। एकपत्नी। ऊढायां पाणिगृहीती। पतिवत्नी। अन्तर्वत्नी। एवं दृढपत्नी। दृढपतिः। ग्रामपत्नी।

## जातेरयान्तनित्यस्त्रीशूद्रात् ॥ १५ ॥

यान्तादिवर्जजातिवाचिनोऽदन्तात्स्त्रियां ङीः स्यात्।

आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ ३ ॥

कुक्कुटी। तटी। नाडायनी। कठी। यान्तादिवर्जनं किम्। क्षत्रिया। खट्वा। शूद्रा। (क्वचिन्नित्यस्त्रीजातेरपि*) ओदनपाकी। शङ्खपुष्पी। पूगफली। दर्भमूली। औषधिविशेषा एते।

## धवाद्योगादपालकान्तात् ॥ १६ ॥

पालकान्तवर्जात्संबन्धतः स्त्रीवृत्तेर्धवनाम्नो ङीः स्यात् । प्रष्ठस्य भार्या प्रष्ठी । गणकी । अपालकान्तादिति किम् । गोपालिका । धवयोगोऽनुवर्तनीयः पञ्चसूत्र्याम् ।

## पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च ॥ १७ ॥

एभ्यः पञ्चभ्यो ङीस्तद्योगेऽन्तस्यैः । पूतक्रतोः स्त्री पूतक्रतायी ।

## मनोरौ च वा ॥ १८ ॥

मनोर्ङीस्तद्योगे औरैश्च वा स्याताम् । मनायी । मनावी । मनुः ।

## वरुणेन्द्रभवशर्वरुद्रमृडादान्चान्तः ॥ १९ ॥

एभ्यः षड्भ्यो ङीस्तद्योगे आन्चान्तः । वरुणानी । इन्द्राणी ।

## मातुलाचार्योपाध्यायाद्वा ॥ २० ॥

एभ्यस्त्रिभ्यो ङीस्तद्योगे चानन्तो वा । मातुलानी मातुली । क्षुभ्नादिपाठान्न णत्वमिति । आचार्यानी आचार्या । उपाध्यायानी उपाध्यायी । ( सूर्याद्देवतायां वा ङीस्तद्योगे चानन्तः* ) सूर्याणी सूर्या । ( अर्यक्षत्रियाद्वा* ) अर्याणी अर्या । क्षत्रियाणी क्षत्रिया ।

## यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ॥ २१ ॥

एभ्यश्चतुर्भ्यो यथासङ्ख्यं दोषादौ गम्ये ङीः स्यात् ङीयोगे चानन्तः। यवानां दोषो यवानी। यवनानां लिपिर्यवनानी। उरु अरण्यं अरण्यानी। महद्धिमं हिमानी। (यञो डायन् चान्तो वा*) गार्ग्यायणी गार्गी। एवमन्यत्रापि यथायोगम्।

## उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ॥ २२ ॥

नृजातिवाचिनोऽप्राणिजातिवाचिनश्चोदन्तात्स्त्रियामूङ्स्यात् नतु य्वन्ताद्रज्ज्वादिभ्यश्च। कुरूः। अलाबूः। प्राणिजातिवर्जनादाखुः। युरज्ज्वादिवर्जनादध्वर्युः स्त्री। रज्जुरित्यादौ नोङ्। (बाह्वन्तकद्रुकमण्डलोर्नाम्नि*) सुबाहूः। कद्रूः। कमण्डलूः। नाम्नीत्येव। वृत्तबाहुः।

## उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः ॥ २३ ॥

उपमानवाचिभ्यः सहितादिभ्यश्च षड्भ्यः परस्य ऊरोः स्त्रियामूङ् स्यात्। रम्भोरूः। सहितोरूः। नारी सखी पङ्गुः श्वश्रूः एते साधवः।

## यूनस्तिः स्त्रियाम् ॥ २४ ॥

युवतिः । ( अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्तस्य ष्यः* ) कारीषगन्ध्या । दैवदन्त्येत्यादि ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां स्त्रीप्रत्ययाधिकारः समाप्तः ।

---

॥ अथ कारकप्रक्रिया ॥

## नाम्नः प्रथमैकद्विबहौ ॥ १ ॥

स्वार्थद्रव्यलिङ्गसंख्याशक्तिलक्षणोऽसमग्रः समग्रो वा पञ्चको नामार्थस्तस्मिन्नेकद्विबहौ वर्तमानान्नाम्नो यथासङ्ख्यं स्यौजस्लक्षणा प्रथमा स्यात् । डित्थः गौः शुक्लः कारकः दण्डी ।

इति प्रथमा ।

## आमन्त्र्ये ॥ २ ॥

संबोधनार्हनाम्नः प्रथमा स्यात् । हे देव ।

## कर्तुर्व्याप्यं कर्म ॥ ३ ॥

कर्त्रा क्रियया यद्विशेषेणाप्तुमिष्यते तत्कारकं व्याप्यं कर्म च स्यात् । तत्त्रेधा निर्वर्त्त्यं विकार्यं प्राप्यं च । यदसज्जायते तन्निर्वर्त्त्यम् । यत्रावस्थान्तरं क्रियते तद्विकार्यम् । यत्सदेव प्राप्यते तत्प्राप्यम् । पुनरेकैकं त्रिधा इष्टमनिष्टमुदासीनं च । मुख्य-

गौणभेदात्तद्द्विधा । कर्मणि द्वितीया स्यात् । कटं करोति । काष्ठं दहति । ग्रामं गच्छति । राज्यं प्राप्नोति । विषमत्ति । ग्रामं गच्छंस्तृणं स्पृशति ।

## स्मृत्यर्थदयेशः ॥ ४ ॥

एषां व्याप्यस्य कर्मत्वं वा कर्मत्वे द्वितीयाऽन्यथा षष्ठी । मातरं स्मरति मातुः स्मरति । मातुः स्मर्यते माता स्मर्यते । सर्पिषो दयते । सर्पिर्दयेत । लोकानीष्टे । लोकानामीष्टे । (नाथस्तथा*) सर्पिर्नाथते । सर्पिषो नाथते ।

## रुजाऽर्थस्याऽज्वरिसन्तापेर्भावेकर्तरि ॥ ५ ॥

ज्वरिसन्तापिवर्जपीडार्थधातूनामपि व्याप्यं कर्म वा भावे कर्तरि सति । चौरस्य चौरं वा रुजति रोगः । (जासनाटक्राथपिषो हिंसायाम्*) चौरस्य चौरं वोज्जासयति ।

## निप्रेभ्यो घ्नः ॥ ६ ॥

समस्तव्यस्तविपर्यस्ताभ्यां निप्राभ्यां परस्य हन्तेर्व्याप्यं कर्म वा स्यात् । चौरस्य चौरं वा निप्रहन्ति निहन्ति प्रहन्ति प्रणिहन्ति इत्यादि । (अधेः शीङ्स्थास आधारः कर्म नित्यं स्यात्*) ग्राममधिशेते अधितिष्ठति अध्यास्ते ।

## उपान्वध्याङ्वसः ॥ ७ ॥

एभ्यो वसतेराधारोऽप्येवम् । ग्राममुपवसति ।

## वाऽभिनिविशः ॥ ८ ॥

अभिनिपूर्वस्य विश आधारः कर्म वा स्यात् । व्यवस्थितविभाषेयम् , तेन क्वचित्कर्मसंज्ञा क्वचिदाधारसंज्ञापि । ग्राममभिनिविशते । कल्याणे अभिनिविशते । ( कालाध्वभावदेशं वा कर्म चाकर्मणाम्* ) मासमास्ते । मास आस्यते । ( क्रियाविशेषणाद्द्वितीया* ) क्रियाव्ययविशेषणे इत्यस्य क्लीबत्वम् । स्तोकं पचति । सुखं स्थाता ।

## उत्कृष्टेऽनूपेन ॥ ९ ॥

उत्कृष्टार्थादनूपाभ्यां युक्ताद्गौणान्नाम्नो द्वितीया भवति । अनुसिद्धसेनं कवयः । उपहेमचन्द्रं वैयाकरणाः । तेषु तौ उत्कृष्टौ इत्यर्थः ।

## गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेनतेनैर्द्वितीया ॥ १० ॥

क्रियान्वयि मुख्यम् परं गौणम् समयादिभिर्नवभिर्युक्ताद्गौणान्नाम्नो द्वितीया स्यात् । समया ग्रामम् । निकषा गिरिं नदी । हा मैत्रं व्याधिः । धिग् जाल्मम् । अन्तरा निषधं नीलं च विदेहाः । अन्तरेण धर्मं क्व सुखम् । अति वृद्धं कुरून् वलं । येन पश्चिमां गतस्तेन पश्चिमां नीतः ।

## द्वित्वेऽधोध्युपरिभिः ॥ ११ ॥

द्विरुक्तैरेभिर्युक्ताद्द्वितीया स्यात्। अधोऽधो ग्रामम्। अध्यधिग्रामम्। उपर्युपरि ग्रामं ग्रामाः। द्वित्व इति किम्। अधो गृहस्य।

सर्वोभयाभिपरिणा तसा ॥ १२ ॥

सर्वादिभिश्चतुर्भिस्तसन्तैर्युक्ताद्द्वितीया स्यात्। सर्वतो ग्रामं वनानि।

कालाध्वनोर्व्याप्तौ द्वितीया ॥ १३ ॥

व्याप्तिर्नैरन्तर्यम्। मासमधीते। क्रोशं गिरिः।

इति द्वितीया।

सिद्धौ तृतीया ॥ १४ ॥

मासेनावश्यकमधीतम्। सिद्धाविति किम्। मासमधीतो नत्याचारोऽनेन गृहीतः।

हेतुकर्तृकरणेत्थम्भूतलक्षणे ॥ १५ ॥

एषु चतुर्षु तृतीया स्यात्। तत्र फलसाधनयोग्यो हेतुः। धनेन कुलम्। चैत्रेण कृतम्। दात्रेण लुनाति। कमण्डलुना छात्रमद्राक्षीत्।

स्वतन्त्रः कर्ता ॥ १६ ॥

चैत्रेण कृतम्। यत्तु चैत्रः कटं करोतीत्यादौ प्रथमा सोक्तत्वात्। आख्यातकृत्प्रत्ययेनोक्ते हि सर्वत्र कारके प्रथमा। यथा घटः क्रियते। स्नानीयं चूर्णम्। दानीयो मुनिः। भयानको व्याघ्रः। गुडाधानी स्थाली।

## साधकतमं करणम् ॥ १७ ॥

क्रियात्वेनाव्यवधानेन विवक्षितं क्रियासिद्धौ प्रकृष्टोपकारकं करणं स्यात्। दानेन लभते भोगम्। किञ्चित्प्रकारमापन्नस्य चिह्नं इत्थंभूतलक्षणम्। कमण्डलुना छात्रं लक्षयेः।

## सहार्थे ॥ १८ ॥

सहार्थस्तुल्ययोगो विद्यमानता च। तस्मिन्गम्यमाने नाम्नस्तृतीया स्यात्। पुत्रेण सहागतः स्थूलो गोमान्।

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भरम्।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ २ ॥

## यद्भेदैस्तद्वदाख्या ॥ १९ ॥

यस्य भेदिनो भेदैः प्रकारैस्तद्वतोऽर्थस्य प्रसिद्धिः स्यात् ततस्तृतीया स्यात्। अक्ष्णा काणः। प्रकृत्या दर्शनीयः। आख्येति प्रसिद्धिपरिग्रहार्थम्। तेनाक्ष्णा दीर्घ इति न स्यात्।

## कृताद्यैः ॥ २० ॥

द्विरुक्तैरेभिर्युक्ताद्द्वितीया स्यात् । अधोऽधो ग्रामम् । अध्यधिग्रामम् । उपर्युपरि ग्रामं ग्रामाः । द्वित्व इति किम् । अधो गृहस्य ।

सर्वोभयाभिपरिणा तसा ॥ १२ ॥

सर्वादिभिश्चतुर्भिस्तसन्तैर्युक्ताद्द्वितीया स्यात् । सर्वतो ग्रामं वनानि ।

कालाध्वनोर्व्याप्तौ द्वितीया ॥ १३ ॥

व्याप्तिर्नैरन्तर्यम् । मासमधीते । क्रोशं गिरिः ।

इति द्वितीया ।

सिद्धौ तृतीया ॥ १४ ॥

मासेनावश्यकमधीतम् । सिद्धाविति किम् । मासमधीतो नत्वाचारोऽनेन गृहीतः ।

हेतुकर्तृकरणेत्थम्भूतलक्षणे ॥ १५ ॥

एषु चतुर्षु तृतीया स्यात् । तत्र फलसाधनयोग्यो हेतुः । धनेन कुलम् । चैत्रेण कृतम् । दात्रेण लुनाति । कमण्डलुना छात्रमद्राक्षीत् ।

स्वतन्त्रः कर्ता ॥ १६ ॥

क्रियासिद्धौ प्रकृष्टो यः स कर्ता स्यात् ।

तथाहुः—निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणत्वादिसंभवः ॥ १ ॥
फलार्थी यः स्वतन्त्रः सन्फलायारभते क्रियाम् ।
नियोक्ता परतन्त्राणां स कर्ता नाम कारकम् ॥ २ ॥

चैत्रेण कृतम् । यत्तु चैत्रः कटं करोतीत्यादौ प्रथमा सोक्तत्वात् । आख्यातकृत्प्रत्ययेनोक्ते हि सर्वत्र कारके प्रथमा । यथा घटः क्रियते । स्नानीयं चूर्णम् । दानीयो मुनिः । भयानको व्याघ्रः । गुडाधानी स्थाली ।

## साधकतमं करणम् ॥ १७ ॥

क्रियात्वेनाव्यवधानेन विवक्षितं क्रियासिद्धौ प्रकृष्टोपकारकं करणं स्यात् । दानेन लभते भोगम् । किञ्चित्प्रकारमापन्नस्य चिह्नं इत्थंभूतलक्षणम् । कमण्डलुना छात्रं लक्षयेः ।

## सहार्थे ॥ १८ ॥

सहार्थस्तुल्ययोगो विद्यमानता च । तस्मिन्गम्यमाने नाम्नस्तृतीया स्यात् । पुत्रेण सहागतः स्थूलो गोमान् ।

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भरम् ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ ३ ॥

## यद्भेदैस्तद्दाख्या ॥ १९ ॥

यस्य भेदिनो भेदैः प्रकारैस्तद्वतोऽर्थस्य प्रसिद्धिः स्यात् ततस्तृतीया स्यात् । अक्ष्णा काणः । प्रकृत्या दर्शनीयः । आख्येति प्रसिद्धिपरिग्रहार्थम् । तेनाक्ष्णा दीर्घ इति न स्यात् ।

## कृताद्यैः ॥ २० ॥

एभिर्निषेधार्थैर्युक्तात्तृतीया स्यात्। कृतं तेन। किं गतेन।

इति तृतीया।

## कर्माभिप्रेयः संप्रदानम् ॥ २१ ॥

कर्मणा व्याप्येन क्रियया वा योऽभिसंबध्यते स संप्रदानं स्यात्। (चतुर्थी संप्रदाने*) देवाय बलिं दत्ते। राज्ञे कार्यमाचष्टे। पत्ये शेते। (स्पृहेर्व्याप्यं वा संप्रदानम्*) साधुभ्यः साधुन् वा स्पृहयति। (क्रुद्द्रुहेर्ष्यासूयार्थैर्योगे यं प्रति कोपः स संप्रदानम्*) मैत्राय क्रुध्यति। द्रुह्यति।

## नोपसर्गात्क्रुद्द्रुहा ॥ २२ ॥

सोपसर्गाभ्यां क्रुद्द्रुहिभ्यां योगे तु न। मैत्रमभिक्रुध्यति।

## तादर्थ्ये ॥ २३ ॥

तस्मै इदमिति गम्यमाने चतुर्थी स्यात्। यूपाय दारु। रन्धनाय स्थाली।

## रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥ २४ ॥

रुच्यर्थैः क्लृप्यर्थैर्धारिणा च योगे यथासङ्ख्यं प्रेयविकारोत्तमर्णेभ्यश्चतुर्थी स्यात्। मैत्राय रोचते धर्मः। मूत्राय कल्पते यवागूः। चैत्राय शतं धारयति।

## उत्पातेन ज्ञाप्ये ॥ २५ ॥

उत्पात आकस्मिकं निमित्तम् तेन ज्ञाप्याच्चतुर्थी स्यात् । वाताय कपिला विद्युत् ।

## गम्यस्याप्ये ॥ २६ ॥

यस्यार्थो गम्यते न च शब्दः प्रयुज्यते तस्य तुमो वाप्याच्चतुर्थी स्यात् । फलेभ्यो व्रजति । गम्यस्येति किम् । फलान्याहर्तुं याति ।

## गतेर्नवाऽनाप्ते ॥ २७ ॥

गतिः पादविहरणं तस्या आप्यादप्राप्ताच्चतुर्थी वा स्यात् । ग्रामं ग्रामाय वा याति ।

## मन्यस्याऽनावादिभ्योऽतिकुत्सने ॥ २८ ॥

अत्यन्तं कुत्सायां गम्यायां मन्यतेर्व्याप्याच्चतुर्थी वा स्यात् । न त्वां तृणाय तृणं वा मन्ये । नावादिगणान्नैवम् । न त्वां नावमन्नं काकं शुकं शृगालं वा मन्ये । (हितसुखाभ्यां योगे वा चतुर्थी*) चैत्राय चैत्रस्य वा हितं सुखम् । (आशिषि गम्यायां हितसुखभद्रायुष्यक्षेमार्थार्थैर्योगे वा चतुर्थी*) हितं पथ्यं सुखं भद्रं आयुष्यं क्षेमं कल्याणं अर्थः कार्यं जीवेभ्यो जीवानां वा भूयात् ।

## शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ॥ २९ ॥

एभिर्निषेधार्थैर्युक्तात्तृतीया स्यात्। कृतं तेन। किं गतेन।

इति तृतीया।

## कर्माभिप्रेयः संप्रदानम् ॥ २१ ॥

कर्मणा व्याप्येन क्रियया वा योऽभिसंबध्यते स संप्रदानं स्यात्। ( चतुर्थी संप्रदाने* ) देवाय बलिं दत्ते। राज्ञे कार्यमाचष्टे। पत्ये शेते। ( स्पृहेर्व्याप्यं वा संप्रदानम्* ) साधुभ्यः साधुन् वा स्पृहयति। ( क्रुद्द्रुहेर्ष्यासूयार्थैर्योगे यं प्रति कोपः स संप्रदानम्* ) मैत्राय क्रुध्यति। द्रुह्यति।

## नोपसर्गात्क्रुद्द्रुहा ॥ २२ ॥

सोपसर्गाभ्यां क्रुद्द्रुहिभ्यां योगे तु न। मैत्रमभिक्रुध्यति।

## तादर्थ्ये ॥ २३ ॥

तस्मै इदमिति गम्यमाने चतुर्थी स्यात्। यूपाय दारु। रन्धनाय स्थाली।

## रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥ २४ ॥

रुच्यर्थैः क्लृप्यर्थैर्धारिणा च योगे यथासङ्ख्यं प्रेयविकारोत्तमर्णेभ्यश्चतुर्थी स्यात्। मैत्राय रोचते धर्मः। मूत्राय कल्पते यवागूः। चैत्राय शतं धारयति।

मापान् प्रयच्छति । (गम्ययपः कर्माधारयोः पञ्चमी*) गृहादासनात्प्रेक्षते । गम्येति किम् । प्रासादमारुह्यासने उपविश्य भुङ्क्ते । (स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे पञ्चमी वा*) स्तोकेन स्तोकान्मुक्तः ।

## प्रभृत्यन्यार्थदिक्शब्दबहिराराादितरैः॥३४॥

एभिर्योगेऽपि पञ्चमी । ततः प्रभृति ग्रीष्मादारभ्य । अन्यो भिन्नो मैत्रात् । ग्रामात्प्राग् वसति । पश्चिमो रामात्कृष्णः । बहिर्ग्रामात् । आराद्ग्रामात् ।

इति पञ्चमी ।

## क्रियाश्रयस्याधारोऽधिकरणम् ॥ ३५ ॥

क्रियाश्रयस्य कर्तुः कर्मणो वाऽऽधारोऽधिकरणं स्यात् । तच्च वैषयिकौपश्लेषिकाभिव्यापकसामीप्यकनैमित्तिकौपचारिकभेदात् षोढा । सप्तम्यधिकरणे । दिवि देवाः । कटे आस्ते । तिलेषु तैलम् । वटे गावः । युद्धे सन्नह्यते । अङ्गुल्यग्रे करी ।

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥ ३६ ॥

एभिर्योगे वा सप्तमी । गवा गोषु वा स्वामी ।

## व्याप्ये क्तेनः ॥ ३७ ॥

क्ताद् य इन् तदन्तस्य व्याप्ये सप्तमी नित्यं स्यात् । व्याकरणेऽधीती ।

## तद्युक्ते हेतौ ॥ ३८ ॥

कर्मसंबन्धाद्धेतौ सप्तमी स्यात् ।
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥५॥

( असाधुसाधुनिपुणयोगेऽपि सप्तमी* ) असाधुर्मैत्रो मातरि । प्रत्यादियोगे तु न साधुर्मैत्रो मातरं प्रति ।

## यद्भावो भावलक्षणम् ॥ ३९ ॥

भावः क्रिया । यस्य भावेनान्यो भावो लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः ।

## षष्ठी वाऽनादरे ॥ ४० ॥

अनादरे गम्ये भावलक्षणा षष्ठी वा, पक्षे सप्तमी । रुदतो लोकस्य रुदति लोके वा प्रव्रजितः ।

## सप्तमी चाविभागे निर्धारणे ॥ ४१ ॥

समुदायादेकदेशस्य जातिगुणक्रियादिभिरविभागे पृथक्करणेऽप्येवम् । क्षत्रियो नृणां नृषु वा शूरः । कृष्णा गवां गोषु वा बहुक्षीरा ।

इति सप्तमी ।

## शेषे ॥ ४२ ॥

कर्मादिभ्योऽन्यस्तदविवक्षारूपः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । उपगोरपत्यम् । माषाणामश्नीयात् ।

## कर्मणि कृतः कर्तरि च ॥ ४३ ॥

कृदन्तस्य कर्तृकर्मणोः षष्ठी स्यात् । अपां स्रष्टा । भवत आसिका । (क्वचिद्वा*) विचित्रा सूत्राणां कृतिराचार्यस्याचार्येण वा ।

## कृत्यस्य वा ॥ ४४ ॥

घ्यण्तव्यानीययक्यपः कृत्याः । एषां कर्तरि षष्ठी वा स्यात् । त्वया तव कार्यं कर्तव्यं करणीयं देयं कृत्यम् ।

## रिरिष्टात्स्तादस्तादसतसाता ॥ ४५ ॥

एभिः सप्तभिर्योगे षष्ठी स्यात् । गृहस्योपरि उपरिष्टात् परस्तात् पुरस्तात् पुरः दक्षिणत उत्तराद्वा ।

## तृन्नुदन्ताव्ययक्वानातृश्शतृडिणकच्खलर्थस्य ॥ ४६ ॥

एषां दशाना कृता कर्मकर्त्रोः षष्ठी न स्यात् । वदिता धर्मम् । विश्वं जिष्णुः । कटं कृत्वा । ओदनं भोक्तुं याति । अन्नं पेचिवान् । कटं चक्राणः । अधीयंस्तत्त्वार्थम् । कटं कुर्वन् । कटं सासहिः । कटं कारको याति । सुकरो धर्मः । सुज्ञानं तत्त्वं भवता ।

## पृथङ्नाना पञ्चमी च ॥ ४७ ॥

आभ्यां योगे तृतीयापञ्चम्यौ स्याताम् । पृथग्

## तद्युक्ते हेतौ ॥ ३८ ॥

कर्मसंबन्धाद्धेतौ सप्तमी स्यात् ।
चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥५॥
(असाधुसाधुनिपुणयोगेऽपि सप्तमी*) असाधुर्मैत्रो मातरि । प्रत्यादियोगे तु न साधुर्मैत्रो मातरं प्रति ।

## यद्भावो भावलक्षणम् ॥ ३९ ॥

भावः क्रिया । यस्य भावेनान्यो भावो लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः ।

## षष्ठी वाऽनादरे ॥ ४० ॥

अनादरे गम्ये भावलक्षणा षष्ठी वा, पक्षे सप्तमी । रुदतो लोकस्य रुदति लोके वा प्रव्रजितः ।

## सप्तमी चाविभागे निर्धारणे ॥ ४१ ॥

समुदायादेकदेशस्य जातिगुणक्रियादिभिरविभागे पृथक्करणेऽप्येवम् । क्षत्रियो नृणां नृषु वा शूरः । कृष्णा गवां गोषु वा बहुक्षीरा ।

इति सप्तमी ।

## शेषे ॥ ४२ ॥

कर्मादिभ्योऽन्यस्तदविवक्षारूपः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । उपगोरपत्यम् । माषाणामश्नीयात् ।

## कर्मणि कृतः कर्तरि च ॥ ४३ ॥

कृदन्तस्य कर्तृकर्मणोः षष्ठी स्यात्। अपां स्रष्टा। भवत आसिका। (क्वचिद्वा*) विचित्रा सूत्राणां कृतिराचार्यस्याचार्येण वा।

## कृत्यस्य वा ॥ ४४ ॥

घ्यण्तव्यानीययक्यपः कृत्याः। एषां कर्तरि षष्ठी वा स्यात्। त्वया तव कार्यं कर्तव्यं करणीयं देयं कृत्यम्।

## रिरिष्टात्स्तादस्तादसतसाता ॥ ४५ ॥

एभिः सप्तभिर्योगे षष्ठी स्यात्। गृहस्योपरि उपरिष्टात् परस्तात् पुरस्तात् पुरः दक्षिणत उत्तराद्वा।

## तृन्नुदन्ताव्ययक्स्वानातृश्शतृङ्णिकच्खलर्थस्य ॥ ४६ ॥

एषां दशानां कृतां कर्मकर्त्रोः षष्ठी न स्यात्। वदिता धर्मम्। विश्वं जिष्णुः। कटं कृत्वा। ओदनं भोक्तुं याति। अन्नं पेचिवान्। कटं चक्राणः। अधीयंस्तत्त्वार्थम्। कटं कुर्वन्। कष्टं सासहिः। कटं कारको याति। सुकरो धर्मः। सुज्ञानं तत्त्वं भवता।

## पृथङ्नाना पञ्चमी च ॥ ४७ ॥

आभ्यां योगे तृतीयापञ्चम्यौ स्याताम्। पृथग्

मैत्रान्मैत्रेण। (अनुमानहेतोरप्येवम्*) शब्दोऽनित्यः कृतकत्वेन कृतकत्वाद्वा।

## ऋते द्वितीया च ॥ ४८ ॥

ऋतेयोगे द्वितीयापञ्चम्यौ स्याताम्। ऋते धर्मं धर्माद्वा कुतः सुखम्।

## विना ते तृतीया च ॥ ४९ ॥

विनायोगे द्वितीयापञ्चमीतृतीयाः स्युः। विना पापं पापात् पापेन सुखं स्यात्।

## तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥ ५० ॥

मात्रा तुल्यः मातुस्तुल्यः।

## द्वितीयाषष्ठ्यावेनेनानञ्चेः ॥ ५१ ॥

पूर्वेण ग्रामं ग्रामस्य। अनञ्चेरिति किम्। प्राग् ग्रामात्।

## हेत्वर्थैस्तृतीयाद्याः ॥ ५२ ॥

हेत्वर्थैर्योगे तृतीयाद्याः सर्वा विभक्तयः स्युः। धनेन हेतुना। धनाय हेतवे। धनाद्धेतोः। धनस्य हेतोः। धने हेतौ वसति। एवं निमित्तादिभिरपि।

## सर्वादेः सर्वाः ॥ ५३ ॥

हेत्वर्थैर्युक्तात्सर्वादेः सर्वा विभक्तयः स्युः। को हेतुः। कं हेतुम्। केन हेतुना। कस्मै हेतवे। कस्माद्धेतोः। कस्य हेतोः। कस्मिन् हेतौ याति।

## अविशेषणे द्वौ चास्मदः ॥ ५४ ॥

विशेषणरहितस्यास्मदो द्वावेकश्चार्थो बहुवद्वा स्यात् । आवां ब्रूवः । अहं ब्रवीमि । वयं ब्रूमः विशेषणे तु आवां गार्ग्यौ ब्रूवः । अहं चैत्रो ब्रवीमीति यथाप्राप्तम् ।

## जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत् ॥ ५५ ॥

सङ्ख्याविशेषणरहितो जातिशब्द एकवच्च बहुवच्च वा स्यात् । संपन्नो यवः । संपन्ना यवाः । सङ्ख्याविशेषणे तु एको व्रीहिः संपन्नः सुभिक्षं करोतीत्येकत्वमेव ।

## गुरावेकश्च ॥ ५६ ॥

गुरौ गौरवार्हे द्वावेकश्चार्थो बहुवद्वा स्यात् । युवां गुरू । यूयं गुरवः । एष मे पिता । एते मे पितरः ।

इति श्रीमहोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां कारकप्रक्रिया समाप्ता ।

---

### अथ समासो निरूप्यते ॥

## नाम नाम्नैकार्थ्ये समासो बहुलम् ॥ १ ॥

नाम नाम्ना सहैकार्थ्ये सामर्थ्यविशेषे सति समासो बहुलं स्यात् । लक्षणमिदमधिकारश्च, तेन

बहुव्रीह्यादिसंज्ञाऽभावे यत्रैकार्थता तत्रानेनैव समासः। विस्पष्टपटुः। स च षोढा। बहुव्रीहिः १ अव्ययीभावः २ तत्पुरुषः ३ कर्मधारयो ४ द्विगुः ५ द्वन्द्वश्च ६। तत्र बहुव्रीहिरन्यपदार्थप्रधानः। अव्ययीभावः पूर्वपदार्थप्रधानः। द्विगु-तत्पुरुषौ परपदार्थप्रधानौ। द्वन्द्व-कर्मधारयौ चोभयपदार्थप्रधानौ। तस्य क्रियाभिसंबन्धात् ऐकपद्यादिकं च समासप्रयोजनम्। समर्थः पदसमुदायो विग्रहो वाक्यमिति च। आरूढाः पुरुषा यमिति वाक्ये।

## एकार्थं चानेकं च ॥ २ ॥

एकमनेकं चैकार्थं समानाधिकरणं नाम, अव्ययं च नाम्ना द्वितीयाद्यन्तान्यपदस्यार्थे समस्यते। स च बहुव्रीहिः।

## ऐकार्थ्ये ॥ ३ ॥

ऐकार्थ्यमैकपद्यं तन्निमित्तस्य स्यादेर्लुप् स्यात्। अत एव लुब्विधानात् नाम नाम्नेत्युक्तावपि स्याद्यन्तानां समासः। 'उक्तार्थानामप्रयोग.' इति यच्छब्दाप्रयोगे आरूढपुरुषो गिरिः। अयं चान्यपदार्थप्राधान्यात्तत्संबन्धिनीर्लिङ्गसङ्ख्याविभक्तीरनुसरति। कृतानि पुण्यानि येन सः कृतपुण्यः। एवं दत्तदानो वीतदु.खो बहुधनोऽनन्तज्ञानः (अनेकं च*) आरूढबहुपुरुषो गिरिः। (अव्ययं च*) उच्चै-

मुखः । (उष्ट्रमुखादयः*) एते बहुव्रीहिसमासा निपात्यन्ते । उष्ट्रस्य मुखमिव मुखं यस्य सः उष्ट्रमुखः । वृषस्कन्धः ।

## सहस्तेन ॥ ४ ॥

तेनेति तृतीयान्तेन सहशब्दोऽन्यपदार्थे समस्यते ।

## सहस्य सोऽन्यार्थे ॥ ५ ॥

बहुव्रीहौ सहस्य सो वा स्यात् । सपुत्रः सहपुत्रो वा गतः । क्वचिन्नित्यम् । सरसा दूर्वा । साग्निः कपोतः । सद्रोणा खारी (क्वचिन्न*) स्वस्ति गुरवे सहशिष्याय ।

## दिशो रूढ्यान्तराले ॥ ६ ॥

दक्षिणस्याः पूर्वस्याश्च यदन्तरालं सा दक्षिणपूर्वा दिक् । सर्वादयोऽस्यादौ इति पूर्वपदस्य पुंवद्भावः । इत्यादयोऽपि बहुव्रीहिसमासा ज्ञेयाः । यत्र प्रधानस्यैकदेशो विशेषणतया ज्ञायते स तद्गुणसंविज्ञानः । लम्बौ कर्णौ यस्य स लम्बकर्णः ।

## विशेषणं सर्वादिसङ्ख्यं बहुव्रीहौ ॥ ७ ॥

विशेषणं सर्वादिकं सङ्ख्यावाचि च बहुव्रीहौ प्राक् स्यात् । (गौणस्य गोशब्दस्य ङ्याद्यन्तस्य चान्तस्थस्य ह्रस्वो वक्तव्यः*) चित्रगुः । सर्वशुक्लः । द्विकृष्णः ।

## क्ताः ॥ ८ ॥

क्तान्तं नाम बहुव्रीहौ प्राक् स्यात् । कृतकटः । क्वचिद्वा । शार्ङ्गरजग्धी जग्धशार्ङ्गरा । मासयाता । यातमासा । जातसुखा सुखजाता । आहिताग्निः अग्न्याहितः । उद्यतासिः अस्युद्यतः । (प्रियः प्राग्वा*) गुडप्रियः प्रियगुडः ।

## न सप्तमीन्द्वादिभ्यश्च ॥ ९ ॥

इन्द्वादिभ्यः प्रहरणार्थाच्च सप्तम्यन्तं बहुव्रीहौ प्राग्न स्यात् । इन्दुमौलिः । चक्रपाणिः । (गड्वादिभ्यो वा*) कण्ठेगडुः । गडुकण्ठः ।

## परतः स्त्री पुंवत्स्त्र्येकार्थेऽनूङ् ॥ १० ॥

परतो विशेष्यवशात्स्त्रीलिङ्गः स्त्रीवृत्तावेकार्थे उत्तरपदे परे पुंवत्स्यान्न तूङन्तः । दर्शनीया भार्या यस्य सः दर्शनीयभार्यः । परत इति किम् । द्रोणीभार्यः । स्त्र्येकार्थ इति किम् । गृहिणीनेत्राः । अनूङिति किम् । करभोरूभार्यः ।

## स्वाङ्गान्ङीर्जातिश्चामानिनि ॥ ११ ॥

स्वाङ्गाद्यो ङीस्तदन्तो जातिवाची च परतः स्त्री पुंवन्न स्यात् । दीर्घकेशीभार्यः । शूद्राभार्यः । कठीभार्यः । अमानिनीति किम् । दीर्घकेशमानिनी । (क्वचिदन्यत्राप्येवम्*) कल्याणीपञ्चमा

रात्रयः । कल्याणीप्रियः । मद्रिकाभार्यः । कारिकाभार्यः । द्वितीयाभार्यः । दत्ताभार्यः ।

## टडापसन्कचितः ॥ १२ ॥

सप्तैते समासान्तास्तद्धिता बहुव्रीहेः स्युः । (सक्थ्यक्ष्णः स्वाङ्गे टः*)

## अवर्णेवर्णस्य ॥ १३ ॥

अपदस्यानयोस्तद्धिते परे लुक् स्यात् । टित्सयान्ताना स्त्रियां ङीः । पङ्कजाक्षी स्त्री ।

## [ डः ] सुज्वार्थे सङ्ख्या सङ्ख्येये सङ्ख्यया बहुव्रीहिः ॥ १४ ॥

वारविकल्पार्थयोः सङ्ख्या सङ्ख्यायां बहुव्रीहिः स्यात् सङ्ख्येयार्थे (प्रमाणीसङ्ख्याड्डः*) । द्विर्दश द्विदशा घटाः । द्वौ वा त्रयो वा द्वित्राः । पञ्चपाः ।

## [ अप् ] नञ्सुव्युपत्रेश्चतुरः ॥ १५ ॥

अचतुराः । सुचतुराः । विचतुराः । उपचतुराः । त्रिचतुराः । (नाभेर्नाम्नि*) पद्मनाभः । (नञ्सुदुर्भ्यः सक्तिसक्थिहलेर्वा*) सञ्जनं सक्तिः । असक्तः असक्तिः । (प्रजाया अस् नञादिभ्यः*)

## नञत् ॥ १६ ॥

उत्तरपदे परे नञः अः स्यात् । अप्रजाः सुप्रजाः ।

## मन्दाल्पाच्च मेधायाः ॥ १७ ॥

नञादिभ्यस्त्रिभ्यो मन्दाल्पाभ्यां च मेधाया अस्। अमेधाः। मन्दमेधाः। अल्पमेधाः।

## द्विपदाद्धर्मादन् ॥ १८ ॥

(समानस्य धर्मादिषु*) धर्मादावुत्तरपदे समानस्य सः। सधर्मा।

## इनः कच् ॥ १९ ॥

बहुदण्डिका सेना। (ऋन्नित्यदितः*) बहुकर्तृको बहुनदीको बहुवधूको देशः। (दध्युरःसर्पिर्मधूपानच्छालेः*) प्रियदधिकः। व्यूढोरस्कः। (पुमनडुन्नौपयोलक्ष्म्या एकत्वे*) प्रियपुंस्कः। (नञोऽर्थात्*) अनर्थकं वचः। (शेषाद्वा*) बहुखट्वः बहुखट्वकः। (क्वचिन्न*) बहुश्रेयान् बहुश्रेयसी।

## सुपूत्युत्सुरभेर्गन्धादिद्गुणे ॥ २० ॥

स्वादिपूर्वाद्गन्धादित्स्यात्। सुगन्धि द्रव्यम्। (वागन्तौ*) सुगन्धिः सुगन्धो वा कायः। (वाल्पे) सूपगन्धि सूपगन्धं वा भोजनम्। (वोपमानात्*) पद्मगन्धि पद्मगन्धं वा मुखम्। बहुव्रीहौ पादादीनां पात्प्रभृतयः आदेशाः समासान्ताः स्युः।

## पात्पादस्याहस्त्यादेः ॥ २१ ॥

हस्त्यादिवर्जादुपमानात्पादस्य पात् । अघुट्स्वरादौ पदादेशश्चास्य । व्याघ्रपात् । व्याघ्रपदः पश्य । हस्त्यादिनिषेधात् हस्तिपादः । (सुसङ्ख्यात्*) सुपात् द्विपात् । (वयसि दन्तस्य दतृः*) ऋकारो नोन्तार्थः । सुदन् द्विदन् बालः । (वाग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकशिखरात्*) कुन्दाग्रदन् । कुन्दाग्रदन्तः । शुद्धदन् शुद्धदन्तः । (धनुषो धन्वन्*) शार्ङ्गधन्वा । (वा नाम्नि*) पुष्पधन्वा । पुष्पधनुः । (जायाया जानिः*) भूजानिः । (स्त्रियामूधसोन्) कुण्डोध्नी गौः ।

इति बहुव्रीहि ।

## विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिपश्चात्क्रमख्यातियुगपत्सदृक्संपत्साकल्यान्तेऽव्ययम् ॥ २२ ॥

एष्वर्थेषु वर्तमानमव्ययं नाम्ना सह पूर्वपदार्थे वाच्ये नित्यं समासोऽव्ययीभावः स्यात् । विभक्तिः । विभक्त्यर्थः कारकम् । स्त्रीषु इति विग्रहे । ऐकार्थ्ये इति विभक्तिलोपः ।

## प्रथमोक्तं प्राग्वत् ॥ २३ ॥

अत्र समासप्रकरणे प्रथमान्तेन सूत्रे यन्निर्दिष्टं तत्प्राक् स्यात् । इत्यव्ययस्य पूर्वभावः । अधिस्त्री इति भवति । द्वन्द्वैकत्वाव्ययीभावौ इत्यव्ययीभा-

वस्य क्लीबत्वात् ह्रस्वत्वम् । नामसंज्ञायां स्यादिः ।

## अनतो लुप् ॥ २४ ॥

अदन्तवर्जस्याव्ययीभावस्य स्यादेर्लुप् स्यात् । अधिस्त्रि गृहकार्यम् ।

## अमव्ययीभावस्यातोऽपञ्चम्याः ॥ २५ ॥

अदन्तस्याव्ययीभावस्य स्यादेरम् स्यात् । न तु पञ्चम्याः । उपकुम्भमस्ति पश्य देहि देशः । उपकुम्भादानय । (वा तृतीयायाः*) उपकुम्भं उपकुम्भेन कृतम् । (सप्तम्या वा*) उपकुम्भं उपकुम्भे निधेहि । मद्राणां समृद्धिः सुमद्रम् । विगता ऋद्धिर्व्यृद्धिः । यवनानां व्यृद्धिर्दुर्यवनम् । अर्थाभावो धर्मिणोऽसत्त्वम् । मक्षिकाणामभावो निर्मक्षिकम् । अत्ययोऽतीतत्वम् । वर्षाणामत्ययोऽतिवर्षम् । असंप्रतीति वर्तमानकाले । उपभोगाद्यभावः। कम्बलस्यासंप्रति अतिकम्बलम् । रथस्य पश्चादनुरथं याति । ज्येष्ठस्य क्रमेणानुज्येष्ठं प्रविशन्तु । भद्रबाहोः ख्यातिरितिभद्रबाहु । अहोभद्रबाहु । चक्रेण युगपत्सचक्रं धेहि (अकालेऽव्ययीभावे सहस्य सः*) व्रतेन सदृक् सव्रतम् । ब्रह्मणः संपत् सब्रह्म साधूनाम् । तृणैः सह सकलं सतृणं भुङ्क्ते । पिण्डेषणापर्यन्तमिति सपिण्डेषणमधीते । अत्र सर्वत्राव्ययार्थप्राधान्यमित्यादि प्राग्वत् ।

## योग्यतावीप्सार्थाऽनतिवृत्तिसादृश्ये ॥ २६ ॥

एतदर्थानामव्ययानामव्ययीभावः स्यात् । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थं समीक्ष्यते । शक्तिमनतिक्रम्य यथाशक्ति दत्ते । शीलस्य सादृश्यमिति सशीलमनयोः ।

## यथाऽथा ॥ २७ ॥

थाप्रत्ययरहितमव्युत्पन्नं यथेत्यव्ययं नाम्ना समस्यते । यथारूपं चेष्टते । अथेति किम् । यथा चैत्रस्तथा मैत्रः ।

## यावदियत्त्वे ॥ २८ ॥

इयत्त्वे गम्ये यावदिति समस्यते । यावन्त्यमत्राणि तावत इति यावदमत्रं श्राद्धान् भोजय ।

## पर्यपाङ्बहिरच् पञ्चम्या ॥ २९ ॥

पर्यादीनि पञ्च पञ्चम्यन्तेन समस्यन्ते । परि त्रिगर्तेभ्यः परित्रिगर्तम् । एवमपत्रिगर्तम् । बहिर्ग्रामम् । आग्रामम् । प्राग्ग्रामं वृष्टो मेघः ।

## लक्षणेनाभिप्रत्याभिमुख्ये ॥ ३० ॥

आभिमुख्ये वर्तमानौ अभिप्रती चिह्नवाचिना समस्येते । अभ्यग्नि प्रत्यग्नि शलभाः पतन्ति । (दैर्घ्येऽनुः*) अनुगङ्गं काशी । (समीपे*) अनुव-

नमशनिर्गता (तिष्ठद्गिवित्यादयः साधवः*) तिष्ठद्गुः कालः ।

## नित्यं प्रतिनाऽल्पे ॥ ३१ ॥

अल्पेऽर्थे वर्तमानेन प्रतिना नित्यं समस्यते सोऽव्ययीभावः स्यात् । शाकस्याल्पत्वं शाकप्रति ।

## पारेमध्येऽग्रेन्तः षष्ठ्या वा ॥ ३२ ॥

एषां चतुर्णां षष्ठ्यन्तेन सहाव्ययीभावो वा स्यात् । गङ्गायाः पारे पारेगङ्गम् । मध्येगङ्गम् । अग्रेवणम् । अन्तर्गिरि । निपातनादेत्वम् । पक्षे गङ्गापारम् ।

## तत्रादायमिथस्तेनप्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ॥ ३३ ॥

सप्तम्यन्तं मिथ आदायेति तृतीयान्तं च मिथः प्रहृत्येति युद्धे वाच्ये सरूपेण नाम्नाव्ययीभावः स्यात् ।

## इच् युद्धे ॥ ३४ ॥

युद्धे यः समासस्तस्मादिच् समासान्तः स्यात् ।

## इच्यस्वरे दीर्घ आच्च ॥ ३५ ॥

इजन्तेऽस्वरादावुत्तरपदे पूर्वपदस्य दीर्घत्वमाच्च स्याताम् । केशेषु केशेषु मिथो गृहीत्वा कृतं युद्धं केशाकेशि । मुष्टिभिर्मुष्टिभिर्मिथः प्रहृत्य कृतं युद्धं मुष्टीमुष्टि । मुष्टामुष्टि । अस्वर इति किम् । अस्यसि ।

## प्रतिपरोनोरव्ययीभावात् ॥ ३६ ॥

प्रत्यादिपूर्वादक्ष्यन्तादव्ययीभावादत्स्यात् । प्रत्यक्षम् । परोक्षम् । अन्वक्षम् ।

## अनः ॥ ३७ ॥

अनन्तादव्ययीभावादत्स्यात् ।

## नोऽपदस्य तद्धिते ॥ ३८ ॥

नकारान्तस्यापदस्य तद्धिते परेऽन्त्यस्वरादेर्लुक् । उपराजम् । (नपुंसकाददन्ताद्वा*) उपचर्मम् । उपचर्म । (गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा*) अन्तर्गिरम् अन्तर्गिरि । उपसमिधम् उपसमित् ।

## सङ्ख्यासमाहारे ॥ ३९ ॥

नदीभिरित्यव्ययीभावे (सङ्ख्याया नदीगोदावरीभ्यामत् स्यात्) पञ्चनद्यः पञ्चनदम् । द्विगोदावरम् । (शरदादेः*) प्रतिशरदम् (जराया जरस्वा*) उपजरसम् । (सरजसोपशुनानुगवम्*) एतेऽदन्ता अव्ययीभावा निपात्याः ।

इत्यव्ययीभाव ।

## प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः ॥ ४० ॥

प्रादयो गताद्यर्थाः प्रथमान्तैरत्यादयः क्रान्ता-

द्यर्था द्वितीयान्तैरवादयः क्रुष्टाद्यर्थास्तृतीयान्तैः पर्यादयो ग्लानाद्यर्थाश्चतुर्थ्यन्तैर्निरादयः क्लान्ताद्यर्थाः पञ्चम्यन्तैर्नित्यं समस्यन्ते स तत्पुरुषः । प्रगतः प्रकृष्टो वाऽऽचार्यः प्राचार्यः। गौणस्य ङ्यावन्तस्यान्तस्थस्य ह्रस्वः। अतिक्रान्तः खट्वामतिखट्वः। अवक्रुष्टः कोकिलयाऽवकोकिलः। परिग्लानोऽध्ययनाय पर्यध्ययनः । निर्गतः कौशाम्ब्याः निष्कौशाम्बिः । (अव्ययं प्रवृद्धादिभिः समस्यते*) पुनःप्रवृद्धं बर्हिः ।

## ङस्युक्तं कृता ॥ ४१ ॥

कृत्प्रत्ययविधायकसूत्रे ङस्यन्तनाम्नोक्तं कृदन्तेन नाम्ना नित्यं समस्यते । कुम्भं करोतीति कुम्भकारः । कर्मणोऽण् इत्यण् । गतिकारकङस्युक्तानां कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समासः । (तृतीयोक्तं न वा*) मूलकेनोपदंशं मूलकोपदंशं भुङ्क्ते । पार्श्वयोः पार्श्वाभ्यां वोपपीडं पार्श्वोपपीडं शेते । (यथायोगं द्वितीयाद्यन्तं नाम प्रथमान्तेन समस्यते स द्वितीयादितत्पुरुष इति वक्तव्यम्*) धर्मप्राप्तः । मदपटुः । आत्मकृतम् । यूपदारु । गोहितम् । वृकभयम् । राजपुरुषः । पानशौण्डः । (सिंहाद्यैः पूजायां सप्तम्यन्तं समस्यते*) समरसिंहः भूमिवासवः । काकाद्यैः क्षेपे*) तीर्थकाकः । तीर्थश्वा इत्यादि ।

## तदर्थार्थेन ॥ ४२ ॥

चतुर्थ्यर्थेनार्थशब्देन चतुर्थ्यन्तं समस्यते । पूजार्था स्रग् । (परःशताद्याः*) पञ्चमीतत्पुरुषाः (सर्वपश्चादादयः*) षष्ठीतत्पुरुषाः (पात्रेसमितेत्यादयश्च*) सप्तमीतत्पुरुषा निपात्याः । (यत्नजषष्ठ्यन्तं न समस्यते*) सर्पिषोनाथितम् ।

## न कर्तरि ॥ ४३ ॥

कर्तृजषष्ठ्यन्तमकान्तेन न समस्यते । तव शायिका ।

## कर्मजा तृचा च ॥ ४४ ॥

कर्मजषष्ठ्यन्तमकान्तेन तृजन्तेन च न समस्यते । भक्तस्य भोजकः । अपां स्रष्टा । (तृतीयायां कर्तरि*) आश्चर्यो गवां दोहोऽगोपेन ।

## तृप्तार्थपूरणाव्ययातृश्शत्रानशा ॥४५॥

एभिः षड्भिः सह षष्ठ्यन्तं न समस्यते । फलानां तृप्तः । तीर्थकृतां षोडशः । राज्ञः साक्षात् । रामस्य द्विषन् । चैत्रस्य पचन् । मैत्रस्य पचमानः । (ज्ञानेच्छार्चार्थाधारक्तेन*) राज्ञां ज्ञातः इष्टः पूजितः । इदमेषां यातम् । (अस्वस्थगुणैः*) पटस्य शुक्लः । काकस्य कार्ष्ण्यम् ।

## नञ् ॥ ४६ ॥

नञ् नाम्ना सह समस्यते स तत्पुरुषः ।

द्वौ नञौ प्रकृतौ लोके पर्युदासप्रसज्यकौ ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥१॥

तदन्यतद्विरुद्धादयो नञोऽर्थाः। नञत् । असाधुः । (त्यादौ क्षेपे नञः अः स्यात्*) अपचसि त्वं जाल्म ।

## अन् स्वरे ॥ ४७ ॥

स्वरादौ परे नञोऽन् स्यात् । अनार्यः । (नखनासत्यादयो निपात्याः*)

## दुर्निन्दाकृच्छ्रे ॥ ४८ ॥

एतन्निन्दाकृच्छ्रवृत्ति नाम्ना समस्यते । दुर्जनः दुष्कृतम् (सुः पूजायाम्*) सुजनः ।

## अतिरतिक्रमे च ॥ ४९ ॥

अतिरतिक्रमेऽचार्यो च समस्यते । अतिस्तुत्यः अतिराजा । (आङल्पे*) आकडारः । (पूर्वापराधरोत्तरमभिन्नेनांशिना समस्यते*) पूर्वकायः। (समेंऽशेऽर्धं वा*) अर्धपिप्पली पिप्पल्यर्धम् । (जरत्यादिभिरप्यर्धो वा समस्यते*) अर्धजरती जरत्यर्धः । (सायाह्नादयः साधवः ।)

## गतिकन्यस्तत्पुरुषः ॥ ५० ॥

गतिसंज्ञाः कु इत्यव्ययं च नाम्ना समस्यते । समासोऽन्यो नहुव्रीह्यादिलक्षणरहितस्तत्पुरुषः स्यात् । उरीकृत्य। प्रणम्य। कुत्सितो ब्राह्मणः कुब्राह्मणः ।

नित्यसमासोऽयमविग्रहोऽस्वपदविग्रहश्च नित्यसमासः स्यात्। (कोः कत्तत्पुरुषे स्वरादौ परे*) कदश्वम्। (रथवदे तथा*) कद्रथः कद्वदः ।

## काऽक्षपथोः ॥ ५१ ॥

अनयोः परयोः कोः का स्यात् । काक्षः । कापथम् । (पुरुषे वा*) कापुरुषः कुपुरुषः ।

## अल्पे ॥ ५२ ॥

ईषदर्थस्य कोः का स्यात् । काच्छम् ।

## काकवौ वोष्णे ॥ ५३ ॥

ईषदर्थस्य कोरुष्णे परे काकवौ वा स्याताम् । कोष्णम् । कवोष्णम् । कदुष्णम् ।

## मयूरव्यंसकेत्यादयः ॥ ५४ ॥

एते तत्पुरुषाः समासा निपात्यन्ते। मयूरव्यंसकः। एहीडं वर्तते । अश्नीतपिबता क्रिया । एहिरेयाहिरा । कुरुकटो वक्ता । गतप्रत्यागतम् । शाकपार्थिवः । त्रिभागः । (समासे यथायोगं लुग्दीर्घह्स्वादिकं वाच्यम्*) मांसाकः मांसपाकः । (उदकादेरुदादिर्यथायोगम्*) उदधिः । उदकुम्भः उदककुम्भः । उदबिन्दुः । उदकबिन्दुः । लवणोदः । द्वीपम् । अनूपः । (राजदन्तादिषु प्राङ्निपातार्हपदस्य विपर्ययः*) दन्तानां राजा राजदन्तः। (तत्पुरुषादद्वसमासान्तौ यथायोगं वक्तव्यौ*) (ऋ-

कृपूःपथ्यपोऽत्*) राज्ञः पूः राजपुरम्। मोक्षस्य पन्थाः मोक्षपथः। (ब्रह्महस्तिराजपल्याद्वर्चसः*) ब्रह्मवर्चसम्।

## गोस्तत्पुरुषात्॥ ५५॥

गवान्तात्तत्पुरुषादट् स्यात्। सुरगवी। (राजन्सखेः*) देवराजः राजसखः।

## अह्नः॥ ५६॥

अस्मादट्। देवाहः। पुण्याहम्। (सङ्ख्यातादह्नश्च वा*) सङ्ख्यातमहः सङ्ख्याताह्नः सङ्ख्याताहः। (सर्वांशसङ्ख्याव्ययात्*) सर्वमहः सर्वाह्नः पूर्वाह्नः। द्वयोरह्नोर्भवो द्व्यह्नः पटः। अत्यह्नी कथा। (सङ्ख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत्*) सङ्ख्यातरात्रः। सर्वरात्रः। अर्धरात्रः।

## पुरुषायुषद्विस्तावत्रिस्तावम्॥ ५७॥

एतेऽदन्तास्तत्पुरुषाः साधवः। (क्वचित्तत्पुरुषात् डः*) न दश अदशाः। (क्वचिन्न*) किंराजा। सुसखा।

इति तत्पुरुषः।

## विशेषणं विशेष्येणैकार्थं कर्मधारयश्च॥ ५८॥

एकार्थं विशेषणवाचि विशेष्यवाचिना समस्यते स तत्पुरुषः कर्मधारयश्च स्यात्। नीलं च तदुत्पलं

च नीलोत्पलम् । श्वेतगवी । एकार्थमिति किम् । वृद्धस्योक्षा वृद्धोक्षा ।

पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ॥ ५९ ॥

पूर्वः कालो यस्य तद्वाचि एकादीनि चैकार्थानि नाम्ना समस्यन्ते । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एकशाटीत्यादि ।

निन्द्यं कुत्सनैरपापाद्यैः ॥ ६० ॥

निन्द्यं निन्दावाचिभिः समस्यते । तार्किकखसूची । अपापाद्यैरिति किम् । पापमुनिः । हतविधिः ।

उपमानं सामान्यैः ॥ ६१ ॥

उपमानवाचि उपमानोपमेयसाधारणधर्मवाचिभिः समस्यते स तत्पुरुषः कर्मधारयश्च स्यात् । शस्त्रीव श्यामा शस्त्रीश्यामा ।

उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥ ६२ ॥

उपमेयवाचि उपमानवाचिभिर्व्याघ्राद्यैः साधारणधर्मानुक्तौ समस्यते । पुरुषो व्याघ्र इव पुरुषव्याघ्रः । साम्योक्तौ तु पुरुषो व्याघ्र इव शूर इत्यत्र न स्यात् ।

सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ॥ ६३ ॥

पूजायां गम्यायामेतानि पञ्च पूज्यवाचिभिः स-

मस्यन्ते स तत्पुरुषः कर्मधारयश्च । सत्पुरुषः ।

## जातीयैकार्थेऽच्वेः ॥ ६४ ॥

महतोऽच्व्यन्तस्य जातीयरि प्रत्यये एकार्थे च पदे परे डाः स्यात् । महाजातीयः । महाराजः ।

## वृन्दारकनागकुञ्जरैः ॥ ६५ ॥

एभिः सह पूज्यवाचि समस्यते । मुनिवृन्दारकः । ( किम् क्षेपे समस्यते ) ( क्षेपार्थात्किमः पूजार्थाभ्यां स्वतिभ्यां नञ्तत्पुरुषाच्च यथायोगं समासान्तनिषेधो वक्तव्यः॥ ) किंराजा । किंगौः ।

## जातमहद्वृद्धादुक्ष्णः कर्मधारयात् ॥ ६६ ॥

कर्मधारये एभ्य उक्ष्णोऽत्स्यात् । जातोक्षः ।

## पुंवत्कर्मधारये ॥ ६७ ॥

अनूङ्परतः स्त्री स्त्र्येकार्थे उत्तरपदे पुंवत्स्यात् । कल्याणी चासौ प्रिया च कल्याणप्रिया ।

। इति कर्मधारय ।

## सङ्ख्यासमाहारे च द्विगुश्चानाम्न्ययम् ॥६८॥

सङ्ख्यावाचि परेण नाम्ना समस्यते संज्ञातद्धितयोर्विषये उत्तरपदे च परे समाहारार्थे च स समासस्तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च स्यात् । अयमेव चासंज्ञायां द्विगुसंज्ञश्च भवति । सप्तर्षयः । द्वैमातुरः । पञ्चगवधनः । संज्ञादिषु नित्यसमासः । समाहारे तु वाक्यमपि भवति ।

## द्विगोः समाहारात् ॥ ६९ ॥

समाहाराद्द्विगोरदन्तात्स्त्रियां ङीः स्यात् । पञ्च ग्रामाः समाहृताः पञ्चग्रामी । (पात्रादिगणान्त इकाराद्यन्तश्च समाहारद्विगुर्नपुंसकम्*) द्विपात्रम् । चतुर्मासम् । त्रिभुवनम् । चतुष्पथम् । त्रिगुप्ति । (अन्नन्तावन्तान्तो वा नपुंसकम्*)

## द्विगोरन्नह्नोऽट् ॥ ७० ॥

अन्नन्तादहनन्ताच्च समाहारद्विगोरट् स्यात् । नोपदस्येति । पञ्चराजी पञ्चराजम् ह्यहः इत्यादि । पञ्चमाली पञ्चमालम् । त्रिसन्ध्यमिति तु क्लीबम् । त्रिफलेति च रूढितः ।

इति द्विगुः ।

## चार्थे द्वन्द्वः सहोक्तौ ॥ ७१ ॥

नाम नाम्ना सह चार्थे समस्यते सहोक्तिविषये सति स समासो द्वन्द्वः स्यात् । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रैकस्मिन् द्व्यादीनां क्रियाकारकद्रव्यगुणानां तुल्यकक्षतया ढौकनं समुच्चयः । चैत्रः पचति पठति चेति । गुणमुख्यभावेनैकस्मिन् द्व्यादीना क्रियादीना ढौकनमन्वाचयः वटो भिक्षामट गां चानय इत्येतयोः सहोक्त्यभावान्न समासः । परस्परसापेक्षाणा द्रव्याणा क्रियां प्रति ढौकनमितरेतरयोगसमाहारौ । तत्रोद्भूतावय-

वभेद इतरेतरयोगोऽत एवात्रावयवद्वित्वबहुत्वापेक्षया द्विवचनबहुवचने। चैत्रश्च मैत्रश्च चैत्रमैत्रौ पश्यतः। चैत्रमैत्रदत्ताः पश्यन्ति। न्यग्भूतावयवभेदस्तु समाहारोऽतस्तत्रैकवचनमेव। धवखदिरपलाशम्।

समानामर्थेनैकः शेषः ॥ ७२ ॥

तुल्यार्थाना द्वन्द्व एकः शिष्यतेऽन्ये निवर्तन्ते। वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा।

स्यादावसङ्ख्येयः ॥ ७३ ॥

सर्वस्यादिषु तुल्यरूपाणां भिन्नार्थानामप्येकशेषः स्यात्सङ्ख्येयवाचिशब्दं वर्जयित्वा। अक्षश्च अक्षश्च अक्षश्च अक्षाः। शकटाङ्गपाशकविभीतकाः।

त्यदादिः ॥ ७४ ॥

अन्येन सहोक्तौ त्यदादिः शिष्यते। मिथः सहोक्तौ तु यथापरम्। स च चैत्रश्च तौ। स च यश्च यौ।

भ्रातृपुत्राः स्वसृदुहितृभिः ॥ ७५ ॥

स्वस्रादिभिः सहोक्तौ भ्रात्रादिः शिष्यते। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। (श्वशुरः श्वश्र्वा वा शिष्यते*) श्वशुरौ श्वश्रूश्वशुरौ। (पिता मात्रा वा तथा*) पितरौ। पक्षे।

मातरपितरं वा ॥ ७६ ॥

मातृपित्रोर्द्वन्द्वे ऋनोऽरो वा निपात्यः। मातरपितरौ। पक्षे।

## आ द्वन्द्वे ॥ ७७ ॥

ऋतां द्वन्द्वे विद्यायोनिसंवन्धे पूर्वपदस्य आः स्यात् । होतापोतारौ । मातापितरौ । पुत्रे । पितापुत्रौ मातापुत्रौ होतापुत्रौ । ( देवताद्वन्द्वे पूर्वपदस्यात्वादिकं वक्तव्यम्* ) सूर्याचन्द्रमसौ । अग्नीषोमौ ।

## पशुव्यञ्जनानाम् ॥ ७८ ॥

एषां स्वैर्द्वन्द्व एकार्थो वा स्यात् । गोमहिषम् । गोमहिषौ । दधिघृतम् दधिघृते । ( तरुतृणधान्यमृगपक्षिणां वहुत्वे वैकार्थता* ) धवन्यग्रोधम् धवन्यग्रोधाः । कुशकाशम् कुशकाशाः । तिलमाषम् २ । शशैणम् २ । हंसशुकम् २ । ( सेनाङ्गक्षुद्रजन्तूनां वहुत्वे नित्यमेकार्थता* ) अश्वरथम् । यूकालिक्षम् । ( प्राणितूर्याङ्गाणां जातिवैरवता च तथा* ) हस्तपादम् । मार्दङ्गिकपाणविकम् । अहिनकुलम् । ( गवाश्वादिः* ) गवाश्वमित्यादि । ( न दधिपयआदिः* ) दधिपयसी । ( सङ्ख्याने तथा* ) दश गोमहिषाः ।

## चवर्गदषहः समाहारे ॥ ७९ ॥

एतदन्तात्समाहारद्वन्द्वादत्स्यात् । वाक्त्वचम् । सपद्विपदम् । वाक्त्विषम् । छत्रोपानहम् । [ स्त्रीपुंसौ । वाङ्मनसे । अहोरात्र• । रात्रिंदिवम् । न-

क्तंदिवम् । अक्षिभ्रुवम् । दारगवमित्यादयोऽदन्ता द्वन्द्वाः साधवः ] ।

## लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरार्च्यमेकम् ॥ ८० ॥

लघ्वक्षरं सखिवर्जेकारोकारान्तं स्वराद्यकारान्तमल्पस्वरं पूज्यवाचि चैकं द्वन्द्वे प्राक् स्यात् । करशीर्षम् । पतिसुतौ । वायुतोयम् । अस्त्रशस्त्रम् । प्लक्षन्यग्रोधम् । श्रद्धामेधे ।

## मासवर्णभ्रात्रनुपूर्वम् ॥ ८१ ॥

एतद्वाचि द्वन्द्वे यथाक्रमं प्राक् स्यात् । ( तुल्यस्वराणां भर्तूनामप्येवम्* ) । फाल्गुनचैत्रौ । ब्राह्मणक्षत्रियौ । रामकृष्णौ । ज्येष्ठामूले । ग्रीष्मवर्षाः । (सङ्ख्यासमासे*) द्वित्राः । (धर्मार्थादिष्वनियमः*) । धर्मार्थौ अर्थधर्मौ । शब्दार्थौ अर्थशब्दौ ।

इति द्वन्द्वः ।

( एकादश षोडश षोडत् षोढा षड्ढा एते साधवः* ) षड् दन्ता यस्य षोडन् ।

## द्वित्र्यष्टानां द्वात्रयोऽष्टाः प्राक् शतादनशीतिबहुव्रीहौ ॥ ८२ ॥

शतात्प्राक् सङ्ख्यायामुत्तरपदे परे द्व्यादीनां द्वादय आदेशाः स्युः न त्वशीतौ बहुव्रीहिविषये च । द्वादश । त्रयोविंशतिः । अष्टात्रिंशत् । ( चत्वारिं-

शदादौ वा॰) द्वाचत्वारिंशत् द्विचत्वारिंशत् । अनशीतिबहुव्रीहाविति किम् । द्व्यशीतिः द्वित्राः । (अन्यादोन्तोऽर्थादिषु वा॰) अन्यदर्थः अन्यार्थः ।

## परस्पराऽन्योन्येतरेतरस्याम् स्या-देर्वा पुंसि ॥ ८३ ॥

एषामपुंसि स्यादेराम् वा स्यात् । स्त्रियौ कुले वा परस्परां परस्परं भोजयतः । स्त्रीभिः कुलैर्वा परस्परां परस्परेण भोज्यते । पुंसि तु नराः परस्परं पश्यन्ति । त्रयोप्यमी क्रियाव्यतिहारविषया एकत्वपुंस्त्ववृत्तय इत एव सूत्रनिर्देशात्साधवः । एवमेकैको द्वन्द्वमित्यादि । समासे क्वचित्स्यादीनामलुप् स्यात् । (ननाम्न्येकस्वरात्खित्युत्तरपदेऽमः॰) स्त्रीं स्त्रियं वात्मानं मन्यते स्त्रींमन्यः स्त्रियंमन्यः । (ओजोऽञ्जः सहोऽम्भस्तमस्तपसष्टः॰) ओजसाकृतम् । (आत्मनः पूरणे॰) आत्मनाचतुर्थः । (परात्मभ्यां ङेः नाम्नि॰) परस्मैपदम् । आत्मनेपदम् । (असत्त्वे ङसेः॰) स्तोकान्मुक्तः । (षष्ठ्याः क्षेपे॰) चौरस्य कुलम् । (पुत्रे वा॰) दास्याःपुत्रः दासीपुत्रः । (पश्यद्वाग्दिशो हरयुक्तिदण्डे॰) पश्यतोहरः । (अदसोऽकञायनणोः॰) अमुष्यपुत्रस्य भाव आमुष्यपुत्रिका । अमुष्यापत्यमामुष्यायणः । देवानांप्रिय इत्यादि । (अद्व्यञ्जनात्सप्तम्या बहुलं नाम्नि॰) अरण्येतिलकाः । युधिष्ठिरः (अमूर्द्धमस्तकात्स्वा-

ङ्गादकामे*) कण्ठेकालः । उरसिलोमा । (क्वचिद्वा*) मनसिजः मनोजः । सरसिजं सरोजम् । वाचस्पत्यादयो निपात्याः । (समासे क्वचित्सकारनकारयोः षत्वणत्वे वक्तव्ये*) मातृष्वसा पितृष्वसा । निष्ण. निष्णातः नदीष्णः । प्रष्ठोऽग्रगे । प्रस्थोऽन्यः । (निर्दुःसुवेः समसूतेः षः*) निःषमः दुःषमा सुषमा । भ्रातुष्पुत्रकस्कादय एते साधवः। ( निष्प्राग्रेन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य नो ण् ) निर्वणं प्रवणम् ।

## द्वित्रिस्वरौषधिवृक्षेभ्यो न वाऽनिरिकादिभ्यः ॥ ८४ ॥

द्वित्रिस्वरेभ्य इरिकादिवर्जेभ्यश्चौषधिवृक्षवाचिभ्यः परस्य वनस्य नस्य णो वा स्यात् । दूर्वावणं दूर्वावनम् । नीवारवणं नीवारवनम् । (गिरिनद्यादीनां वा*) गिरिणदी गिरिनदी । एवं क्षीरपाणं क्षीरपानम् । व्रीहिवापिणौ व्रीहिवापिनौ । (ग्रामाग्रान्नियः*) ग्रामणीः । पृषोदरादयः साधवः।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां समासप्रक्रिया समाप्ता ।

---

अथ तद्धिता निरूप्यन्ते ॥

## तद्धितोऽणादिः ॥ १ ॥

वक्ष्यमाणाः प्रत्ययास्तद्धितसंज्ञाः स्युः । चाद्यात् प्रागूजितादणइत्याद्यधिकृतम् । उपगोरपत्यम् अनन्तरं वृद्धं चेति वाक्ये ।

## ङसोऽपत्ये ॥ २ ॥

षष्ठ्यन्तान्नाम्नोऽपत्येऽर्थे यथाविहितमणादयः स्युः।

## आद्यात् ॥ ३ ॥

अपत्यार्थप्रत्यया आद्यात्परमप्रकृतेरेव स्युः । ऐकार्थ्ये इति विभक्तिलुपि उपगु अण् इति स्थिते णकारो वृद्ध्यर्थः ।

## वृद्धिः स्वरेष्वादेर्ञ्णिति तद्धिते ॥ ४ ॥

ञिति णिति च तद्धिते परे प्रकृतेराद्यस्वरस्य वृद्धिः स्यात् ।

## अस्वयंभूवोऽव् ॥ ५ ॥

स्वयंभूवर्जोवर्णस्यापदस्य तद्धिते परेऽव् स्यात् । औपगवः । अस्वयंभुव इति किम् स्वायंभुवः ।

## अणञेयेकण्नञ्स्नञ्टिताम् ॥ ६ ॥

एतदन्तानां स्त्रियां ङीः स्यात् । औपगवी । नोऽपदस्य तद्धित इत्यन्त्यस्वरादिलुकि मैधावः ।

## अणि ॥ ७ ॥

अन्नन्तस्याण्यन्त्यस्वरादेर्लुग् न स्यात्। सौत्वनः।

## अत इञ् ॥ ८ ॥

अदन्तात्पष्ठ्यन्तादपत्ये इञ् स्यात् ञकारो वृद्ध्यर्थः। अवर्णेवर्णस्येत्यलुकि दाक्षिः।

## बाह्वादिभ्यो गोत्रे ॥ ९ ॥

स्वापत्यसन्तानस्य स्वव्यपदेशहेतुर्य आद्यपुरुषस्तदपत्यं गोत्रम्। बाह्वादिभ्यो गोत्रे इञ् स्यात्। बाहविः। (क्वचिदिञि स्लुक्*) भूयसामपत्यं भौयिः आम्भिः।

## व्यासवरुटसुधातृनिपादबिम्बचण्डालादन्तस्य चाक् ॥ १० ॥

एभ्योऽपत्ये इञन्तस्य चाक्।

## य्वः पदान्तात्प्रागैदौत् ॥ ११ ॥

ञ्णिति तद्धिते परे यौ य्वौ पदान्तौ ताभ्यां प्रागैदौतौ स्यातामिति यकाराद्विश्लेषितस्य वकारस्यैकारागमः। वैयासकिः।

## पुनर्भूपुत्रदुहितृननान्दुरनन्तरेऽञ् ॥ १२ ॥

एभ्योऽनन्तरेऽपत्येऽञ् स्यात्। पौनर्भवः पौत्रः दौहित्रः नानान्द्रः पौत्री।

## विदादेर्वृद्धेऽञ् ॥ १३ ॥

बहुत्वे चास्त्रियामस्य लुप्।

## पौत्रादि वृद्धम् ॥ १४ ॥

परमप्रकृतेर्यत्पौत्राद्यपत्यं तद्वृद्धं स्यात्। विदस्य वृद्धमपत्यं वैदः और्वः।

## गर्गादेर्यञ् ॥ १५ ॥

वृद्धे। गार्ग्यः।

## व्यञ्जनात्तद्धितस्य ॥ १६ ॥

व्यञ्जनात्परस्य तद्धितस्य यो ङ्यां लुक्। गार्गी। (कुञ्जादेर्ञायन्यः वृद्धे*) कौञ्जायन्यः। (स्त्रीबहुष्वायनञ् वृद्धे*) कौञ्जायनी कौञ्जायनाः। (अश्वादेरायनञ् वृद्धे*) आश्वायनः (नडादिभ्य आयनण् वृद्धे*) नाडायणः।

## अदसोऽकञायनणोः ॥ १७ ॥

अकञन्ते उत्तरपदे आयनणि चादसः षष्ठ्या अलुप् स्यात्। अमुष्यापत्यं आमुष्यायणः।

## यञिञः ॥ १८ ॥

वृद्धे यौ यञिञौ ततो यून्यपत्ये आयनण् स्यात्।

## वंश्यज्यायोभ्रात्रोर्जीवति प्रपौत्राद्यस्त्री युवा ॥ १९ ॥

पित्रादिः स्वहेतुर्वंश्यो वंश्ये ज्येष्ठभ्रातरि च

जीवति प्रपौत्राद्यपत्यं स्त्रीवर्जं युवा स्यात् । समानसप्तमपुरुषे च वयःस्थानाधिके जीवति जीवद् वा।

वृद्धाद्यूनि ॥ २० ॥

यून्यपत्ये यः प्रत्ययः स आद्याद्वृद्धप्रत्ययान्तात्स्यात् । गर्गस्य वृद्धापत्यं गार्ग्यस्तस्य युवापत्यं गार्ग्यायणः । दाक्षायणः ।

शिवादेरण् ॥ २१ ॥

इञोऽपवादः । अधिकारादपत्ये इत्यनुवर्तनीयम् । शैवः प्रौष्ठः । (ऋषिवृष्ण्यन्धककुरुभ्योऽण्*) वासिष्ठः । वासुदेवः । श्वाफल्कः । नाकुलः ।

भृग्वङ्गिरस्कुत्सवसिष्ठगोतमात्रेः ॥ २२ ॥

एभ्यः षड्भ्यो बहुत्वे गोत्रार्थप्रत्ययस्यास्त्रियां लुप् स्यात् । भृगवः । वसिष्ठाः । स्त्रियस्तु वासिष्ठ्यः ।

सङ्ख्यासंभद्रान्मातुर्मातुर्च ॥ २३ ॥

सङ्ख्यार्थात्संभद्राभ्यां च परस्य मातुरण् मातुरादेशश्च । षाण्मातुरः । सांमातुरः ।

वृद्धिर्यस्य स्वरेष्वादिः ॥ २४ ॥

यस्यादिस्वरो वृद्धिसंज्ञः स्यात् स दुः स्यात् (त्यदादयश्च दुसंज्ञाः स्युः) (संज्ञादुर्वो*) देवदत्तीयाः । दैवदत्ताः ।

अदोर्नदीमानुषीनाम्नः ॥ २५ ॥

दुसंज्ञवर्जान्नदीनाम्नो मानुषीनाम्नश्चापत्ये अण् स्यात् । यामुनः । दैवदत्तः ।

## ङ्याप्त्यूङः ॥ २६ ॥

एभ्यश्चतुर्भ्य एयण् स्यात् । सौपर्णेयः । त्रैशलेयः । यौवतेयः ( कद्रूपाण्डूवर्जोवर्णस्य एये लुग् वक्तव्या* ) कामण्डलेयः । ( द्विस्वरनद्यर्थात्तु नैयण* ) सैप्रः ।

## इतोऽनिञः ॥ २७ ॥

इञ्वर्जेदन्ताद्विस्वरादेयण् स्यात् अपत्ये । नाभेयः । ( शुभ्रादिभ्य एयण* ) । शौभ्रेयः । गाङ्गेयः ।

## कल्याणादेरिन् चान्तस्य ॥ २८ ॥

एभ्य एयण् स्यात् अन्तस्य चेन् । काल्याणिनेयः । ( क्वचिदुभयपदवृद्धिः* ) सौभागिनेयः । पारस्त्रैणेयः । ( कुलटाया वा अन्तस्येन्* ) कौलटिनेयः कौलटेयः । ( चटकाण्णैरः स्त्रियां तु लुप् तस्य* ) चाटकैरः चटका ।

## क्षुद्राभ्य एरण् वा ॥ २९ ॥

अङ्गहीना व्यभिचारिण्यो वा स्त्रियः क्षुद्रास्ताभ्य एरण् वा स्यात् । काणेरः काणेयः । दासेरः दासेयः । नाटेरः नाटेयः । ( गोधाया दुष्टे णारश्च* ) गौधारः गौधेरः । अदुष्टे तु गौधेयः । ( भ्रातुर्व्यः* ) भ्रातृव्यः ।

## ईयः स्वसुश्च ॥ ३० ॥

भ्रातुः स्वसुश्च ईयः । भ्रात्रीयः स्वस्रीयः ।

## मातृपित्रादेर्डेयणीयणौ ॥ ३१ ॥

मातृपितृपूर्वात्स्वसुरेतौ स्याताम् । मातृष्वसेयः मातृष्वस्रीयः । पैतृष्वसेयः पैतृष्वस्रीयः । ( श्वशुराद्यः* ) श्वशुर्यः ।

## जातौ राज्ञः ॥ ३२ ॥

राज्ञोऽपत्ये यः स्यात् जातौ गम्यायाम् ।

## अनोऽत्ये ये ॥ ३३ ॥

अन्नन्तस्य व्यवर्जे यादौ तद्धिते परेऽन्त्यस्वरादेर्लुग् न स्यात् । राजन्यः । क्षत्रियजातिश्चेत् । ( क्षत्रादियस्तथा* ) क्षत्रियः । ( मनोर्याणौ षश्चान्तो जातौ* ) मनुष्याः मानुषाः । ( माणवः कुत्सायाम्* ) मनोरपत्यं मूढं माणवः ।

## कुलादीनः ॥ ३४ ॥

कुलान्तात् केवलाच्च कुलादपत्ये ईनः । बहुकुलीनः कुलीनः । ( दुष्कुलादेयण् वा ) दौष्कुलेयः दुष्कुलीनः । ( महाकुलाद्वाऽञीनञौ* ) माहाकुलः । माहाकुलीनः महाकुलीनः । ( कुर्वादेर्न्यः* ) कौरव्याः । शाङ्कव्याः ।

## राष्ट्रक्षत्रियात्सरूपाद्राजापत्ये द्रिरञ् ॥३५॥

राष्ट्रक्षत्रियसरूपाच्छब्दाद्राष्ट्रार्थाद्राजार्थे क्षत्रियार्थाच्चापत्येऽञ् स्यात् स च द्रिसंज्ञः।

## बहुष्वस्त्रियाम् ॥ ३६ ॥

बहुत्वे च द्रेरस्त्रियां लुक्। विदेहानां राजानोऽपत्यानि वा विदेहाः। स्त्रियस्तु वैदेह्यः। सरूपादिति किम्। सौराष्ट्रको राजा। एवं दाशरथिः।

## पुरुमगधकलिङ्गशूरमसद्विस्वरादण् ॥३७॥

पुर्वादिभ्यो द्विस्वरेभ्यश्चाण् द्रिः स्यात्। पौरवः। आङ्गो राजाऽपत्यं वा।

## दुनादिकुर्वित्कोसलाऽऽजादाञ् ञ्यः ॥ ३८ ॥

दुसंज्ञेभ्यो नादेः कुरोरिदन्तेभ्यः कोसलाऽऽजादाभ्यां च द्रिर्ञ्यः स्यात्। आम्बष्ठ्यो राजाऽपत्यं वा। एवं नैषध्यः कौरव्यः आवन्त्यः कौसल्यः आजाद्यः। (पाण्डोर्ड्यण्*) पाण्ड्यः। (शकादिभ्यो द्रेर्लुप्*) शकः। यवनः।

इत्यपत्यप्रत्ययाधिकार।

## पितृमातुर्व्यडुलं भ्रातरि ॥ ३९ ॥

आभ्यां यथासङ्ख्यं भ्रातरि व्यडुलौ स्याताम्। पितृव्यः मातुलः।

## पित्रोर्डामहट् ॥ ४० ॥

पितृमातृभ्या मातापित्रोर्डामहट् स्यात्। पितामहः पितामही। मातामह· मातामही।

## रागाट्टो रक्ते ॥ ४१ ॥

येन कुसुम्भादिना वस्त्रादि रज्यते स रागस्तस्माट्टान्ताद्रक्तमित्यर्थेऽण् स्यात् । कुसुम्भेन रक्तं कौसुम्भं वस्त्रम् । (लाक्षारोचनादिकण्*) लाक्षिकः रौचनिकः पटः ।

## षष्ठ्याः समूहे ॥ ४२ ॥

षष्ठ्यन्तात्समूहेऽणादयः स्युः । चापम् । (भिक्षादेः*) भैक्षं गार्भिणम् । (गोत्रोक्षादिभ्योऽकञ्*) औपगवकम् । औक्षकम् । (केदाराण्ण्यकञौ*) कैदार्यं कैदारकम् । (कवचिहस्त्यचित्ताच्चेकण्*) कावचिकं । हास्तिकम् । आपूपिकम् । कैदारिकम् । (ब्राह्मणमाणववाडवाद्यः*) ब्राह्मण्यम् । (गणिकाया ण्यः*) गाणिक्यम् । (केशाद्वा*) कैश्यं कैशिकम् । (वाऽश्वादीयः*) अश्वीयं आश्वम् । (पश्वार्दूण्*) पर्शूनां समूहः पार्श्वम् ।

## गोरथवातात्त्रल्कट्यलूलम् ॥ ४३ ॥

एभ्यस्त्रिभ्य एते त्रयः स्युः । लिप्रत्ययान्तानां स्त्रीत्वम् । गोत्रा रथकट्या वातूलः ।

## पाशादेश्च ल्यः ॥ ४४ ॥

गवादिभ्यः पाशादेश्च ल्यः स्यात् ।

## य्यक्ये ॥ ४५ ॥

ओदौतोः क्यवर्जे यादौ प्रत्ययेऽवावौ स्याताम् ।

गव्या वात्या पाश्या । (श्वादिभ्योऽञ्*) शौवम् । (खलादिभ्यो लिन्*) खलिनी ऊकिनी । (ग्रामजनबन्धुगजसहायात्तल्*) ग्रामता ।

इति सामूहिकाः ।

## विकारे ॥ ४६ ॥

षष्ठ्यन्ताद्विकारेऽणादयः स्युः ।

## वाऽश्मनो विकारे ॥ ४७ ॥

विकारार्थे तद्धितेऽश्मनोऽन्त्यस्वरादेर्वा लुक् । आश्मनः आश्मः । (त्रपुजतोरण् षोऽन्तश्च*) त्रापुषं जातुषम् । (पयोद्रोर्यः*) पयस्यं द्रव्यम् । (एकस्वरान्मयट्*) मृन्मयम् । (गोः पुरीषे*) गोमयम् । (अपो यञ्वा*) आप्यं अम्मयम् ।

## ह्योगोदोहादीनञ् हियङ्गुश्चास्य ॥ ४८ ॥

ह्योगोदोहशब्दाद्विकारे नाम्नीनञ् प्रकृतेर्हियङ्गुरादेशश्च स्यात् । हैयङ्गवीनम् । नवनीतं घृतं वा ।

## प्राण्यौषधिवृक्षेभ्योऽवयवे च ॥ ४९ ॥

एभ्यो विकारेऽवयवे चाणादयः स्युः । कापोतं सक्थि मासं वा । दौर्वं वैल्वं काण्डं भस्म वा ।

## अभक्ष्याच्छादने वा मयट् ॥ ५० ॥

भक्ष्याच्छादनवर्जे यथार्हं विकारावयवयोर्मयड्वा । भस्ममयं भासनम् । निषेधे—मौद्गः सूपः । कार्पासः पटः । (लुब्बहुलं पुष्पमूले फले वैकारिकस्य*)

मल्लिका पुष्पम् ।। विदारी मूलम् । आमलं फल-मित्यादि ।

इति वैकारिका ।

तदत्रास्ति १ तेषां निवासः २ तस्माददूरभवं ३ तेन निर्वृत्तं ४ चेत्यर्थचतुष्टयेऽणादयो मतुश्च यथार्हं देशे नाम्नि च वक्तव्याः । औदुम्बरं १ शैवं २ वैदिशं पुरं ३ कौशाम्बी पुरी ४ मधुमान् उदुम्बरावती। (नडकुमुदवेतसमहिषाड्डिन्मतुः*) नड्वान् कुमुद्वान् ( नडशादाद् ड्वलः* ) नड्वलः शाद्वलः ।

इति चातुरर्थिका ।

## देवता ॥ ५१ ॥

देवतार्थात्प्रथमान्तात् षष्ठ्यर्थेऽणादयः स्युः । जिनो देवता अस्येति जैनः ।

## तद्वेत्त्यधीते ॥ ५२ ॥

द्वितीयान्ताद्वेत्त्यधीते वेत्यर्थयोरणादयः स्युः । वैयाकरणः । ( न्यायादेरिकण्* । नैयायिकः ।

## संस्कृते भक्ष्ये ॥ ५३ ॥

सप्तम्यन्तादस्मिन्नर्थेऽणादयः स्युः भ्राष्ट्राः अपूपाः । ( शूलोखाद्यः* ) शूल्यम् उख्यम् । ( क्षीरादेयण्* ) क्षैरेयी यवागूः ।

## तत्र कृतलब्धक्रीतसंभूते कुशले जाते भवे ॥ ५४ ॥

सप्तम्यन्तादेष्वर्थेष्वणादयः स्युः । स्रौघ्नः । (दिगादिदेहांशाद्यो भवे*) दिश्यः मूर्धन्यः । (मध्याद्दिनण्णेया मोऽन्तश्च*) माध्यंदिनः । माध्यमः । मध्यमीयः । (वर्गान्तादीयः*) कवर्गीयः । (अशब्दवर्गादीनयेयाः*) भरतवर्गीणः । भरतवर्ग्यः । भरतवर्गीयः ।

## तत आगते ततः प्रभवति ॥५५॥

अनयोरर्थयोः पञ्चम्यन्तादणादयः स्युः । माथुरः पान्थः । हैमवती गङ्गा ।

## तस्येदम् ॥ ५६ ॥

षष्ठ्यन्तादस्मिन्नर्थेऽणादयः स्युः । आर्षम् ।

## तेन प्रोक्ते उपज्ञाते कृते ॥ ५७ ॥

तृतीयान्तादेष्वणादयः स्युः । भाद्रबाहवं शास्त्रम् । विनोपदेशमादौ ज्ञातं उपज्ञातम् ।

## साधुपुष्प्यत्पच्यमाने उप्ते ॥ ५८ ॥

सप्तम्यन्तात्कालार्थादेष्वर्थेष्वणादयः स्युः । शिशिरे साधु शैशिरं तैलम् । वसन्ते पुष्प्यन्ति पच्यन्ते उप्ता वा वासन्त्यो लताः । कृतादयः सप्तदशार्थाः शेषसंज्ञाः । दिङ्मात्रमेतत् । (नद्यादेरेयण् शेषे*) नद्या कृतादिर्नादेयः । वानेयः । (राष्ट्रादियः*) राष्ट्रियः । शेषे इत्यधिकारादनुवर्तनीयम् । (दूरादेत्यः*) दूरेत्यः । (उत्तरादाहञ्*) औत्तराहः ।

( पारावारादीनः* ) पारावारीणः ( व्यस्तव्यत्यस्तादपि ) पारीणः । अवारीणः । अवारपारीणः । अलंगामीत्यर्थेप्येवम् । पारमलंगामी पारीण इत्यादि ( द्युप्रागपागुदक्प्रतीचो यः* ) दिव्यं प्राच्यमपाच्यमुदीच्यं प्रतीच्यम् । ( ग्रामादीनञ्च* ) ग्रामीणः ग्राम्यः ।

कत्र्यादेश्चैयकञ् ॥ ५९ ॥

कत्र्यादिभ्यो ग्रामाच्चैयकञ् । कात्रेयकः । ग्रामेयकः । ( दक्षिणापश्चात्पुरसस्त्यण्* ) दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

क्वेहामात्रतसस्त्यच् ॥ ६० ॥

क्वेहामाभ्यस्त्रतस्प्रत्ययान्तेभ्यश्च त्यच् स्यात् । क्वत्यः इहत्यः अमात्यः कुत्रत्यः कुतस्त्यः । ( ऐषमो ह्यःश्वसो वा त्यच्* ) ऐषमस्त्यम् । पक्षे ।

सायंचिरंप्राह्णेप्रगेऽव्ययात् ॥ ६१ ॥

एभ्यः कालार्थेभ्यस्तनट् स्यात् । ऐषमस्तनम् । ह्यस्त्यं ह्यस्तनम् । श्वस्त्यं श्वस्तनम् । ( भवतोरिकणीयसौ* ) क्वचिदिकस्येतो लुक् । भावत्कम् भवदीयम् । ( परजनराज्ञोऽकीयः* ) परकीयः । राजकीयः । ( दोरीयः* ) देवदत्तीयः तदीयः पाणिनीयम् । ( ईयेऽन्याद्दोन्तः* ) अन्यदीयम् । ( वा युष्मदस्मदोऽञीनञौ युष्माकास्माकं चास्यैकत्वे तु

तवकममकम्* ) यौष्माकः यौष्माकी स्त्री यौष्माकीणः । यौष्माकीणा । युष्मदीयः । आस्माकः आस्माकीनः अस्मदीयः । तावकं मामकम् । तावकीनं मामकीनम् । त्वदीयं मदीयम् ।

## अमोन्ताऽवोऽधसः ॥ ६२ ॥

अन्तादवसधस्भ्यां चामः स्यात् ।

## प्रायोऽव्ययस्य ॥ ६३ ॥

तद्धिते परेऽव्ययस्यान्त्यस्वरादेः प्रायो लुक् । अन्तमः अधमः । ( पश्चादाद्यन्ताग्रादिमः ) पश्चिमः । ( मध्यान्मः* ) मध्यमः । ( अध्यात्मादिभ्य इकण्* ) आध्यात्मिकं आधिदैविकम् ।

## समानपूर्वलोकोत्तरपदात् ॥ ६४ ॥

समानपूर्वपदेभ्यो लोकोत्तरपदेभ्यश्चेकण् स्यात्। सामानग्रामिकः । पारलौकिकः ।

## वर्षाकालेभ्यः ॥ ६५ ॥

वर्षाशब्दात्कालविशेषाच्चेकण् स्यात् । वार्षिकः मासिकः । ( क्वचिद्वा* ) नैशिकः नैशः । ( चिरपरुत्परारेस्त्नो वा*) चिरत्नं चिरतनमित्यादि । (पुरो नः * ) पुराणं पुरातनम् । ( पूर्वाह्णापराह्णात्तनङ्वा सप्तम्या अलुप्* ) पूर्वाह्णेतनः पौर्वाह्णिकः ( भर्तुसन्ध्यादेरण्* ) आश्विनः ग्रैष्मः सान्ध्यः ।

## हेमन्ताद्वा तो लुक् च ॥ ६६ ॥

अस्माद्वाण् तद्योगे तलुक् च वा। हैमनं हैमन्तं हैमन्तिकं (प्रावृष एण्यः शेषे*) प्रावृषेण्यः (जाते त्विकः*) प्रावृषिकः। पूर्णः शेषाधिकारः। अणोप्यवधिः पूर्णः। (जितादिष्वर्थेषु यथायोगमिकणादयो वक्तव्याः*) अक्षैर्जितं आक्षिकः। दध्ना संस्कृतं संसृष्टं वा दाधिकम्। उडुपेन तरति औडुपिकः नाविकः। हस्तिना चरति हास्तिकः। वेतनेन जीवति वैतनिकः क्रयिकः। मीनान् हन्ति मैनिकः। परदारान् गच्छति पारदारिकः। सुस्नातं पृच्छति सौस्नातिकः। प्रभूतं ब्रूते प्राभूतिकः। सेनां समवैति सैनिकः। धर्मं चरति धार्मिकः। आधर्मिकः। अपूपाः पण्यमस्य आपूपिकः। नृत्तं शिल्पमस्य नार्त्तिकः। असिः प्रहरणमस्य आसिकः। (नास्तिकास्तिकादयो निपात्याः*)

## भावादिमः ॥ ६७ ॥

भावप्रत्ययान्तान्निर्वृत्ते इमः स्यात्। सेकिमम् फलम्।

## द्वारादेः ॥ ६८ ॥

एषां य्वोः प्रागैदौतौ स्याताम्। द्वारे नियुक्तो दौवारिकः। निकटे वसति नैकटिकः। समाने तीर्थे वसति सतीर्थ्यः। पन्थानं याति पथिकः पान्थः। अह्ना निर्वृत्तमाह्निकमित्यादि।

## मूल्यैः क्रीते ॥ ६९ ॥

मूल्यार्थात्तृतीयान्तात्क्रीतेऽर्थे इकणादयः स्युः । प्रास्थिकम् ।

## मानम् ॥ ७० ॥

अस्मात्प्रथमान्तार्थात्षष्ठ्यर्थे इकणादयः स्युः । द्रोणो मानमस्य द्रौणिको राशिः ।

## विंशत्यादयः ॥ ७१ ॥

एते निपात्यन्ते । द्वौ दश तौ मानमेषा विंशतिः । एवं त्रिंशदादयः । (पञ्चदशद्वर्गे वा*) पञ्चदशत्पञ्चको दशको वा वर्गः ।

## तमर्हति ॥ ७२ ॥

द्वितीयान्तादर्हत्यर्थे इकणादयः स्युः । विषमर्हति वैषिकः । नित्यं छेदमर्हति छैदिकः । विरागस्य विरङ्गादेशे वैरङ्गिकः । (दण्डादेर्यः*) दण्डमर्हतीति दण्ड्यः । अर्घ्यः । क्रीतादयश्चत्वार आर्हदर्थाः । ( त्रिंशद्विंशतेर्डकोऽसंज्ञायामार्हदर्थे* ) त्रिंशता क्रीतो यावत्त्रिंशतमर्हति त्रिंशकः । ( विंशतेस्तेर्डिति लुक्*) विंशकः ।

## सङ्ख्याडतेश्चाशत्तिष्टेः कः ॥७३ ॥

शदन्तत्यन्तष्ट्यन्तवर्जसङ्ख्याया डतेस्त्रिंशद्विंशतिभ्यां चार्हदर्थे कः स्यात् । द्विकं त्रिंशत्कं विंश-

तिकं कतिकं यावत्कम् । डतेः पृथग्ग्रहणं त्यन्तप्राप्तनिषेधपरिहाराय । अशत्तिष्टेरिति किम् । चात्वारिंशत्कम् । साप्ततिकम् । षाष्टिकम् । (सहस्रशतमानादण् आर्हदर्थे*) साहस्रः शातमानः ।

## अनाम्न्यद्विः प्लुप् ॥ ७४ ॥

द्विगोरार्हदर्थे जातस्य प्रत्ययस्य लुप् स्यात् नतु द्विः अनाम्नि । द्वाभ्यां कंसाभ्यां क्रीतो द्विकंसः ।

इत्यार्हदर्थावधिः ।

## वहति रथयुगप्रासङ्गात् ॥ ७५ ॥

एभ्यो द्वितीयान्तेभ्यो वहत्यर्थे यः स्यात् । रथं वहति रथ्यः । (धुरो यैयण*) धुर्यः धौरेयः । (वामाद्यादेरीनः*) वामधुरीणः । (हलसीरादिकण्*) हालिकः सैरिकः । (शकटादण्*) शाकटः । हृद्यधर्म्यपथ्यादयः साधवः । (नौविषेण तार्यवध्ये*) नाव्या नदी । विष्यः शत्रुः । (न्यायार्थादनपेते यः*) न्यायादनपेतं न्याय्यं अर्थ्यम् ।

## तत्र साधौ ॥ ७६ ॥

सप्तम्यन्तात्साधौ यः स्यात् । सभ्यः । (पर्षदो ण्यणौ साधौ*) पार्षद्यः पार्षदः पारिषद्यः पारिषदः । ( सर्वजनाण्ण्येनञौ साधौ*) सार्वजन्यः सार्वजनीनः । (पथ्यादेरेयण्*) पाथेयम् । आतिथेयी । ( ण्योऽतिथेः*) आतिथ्यम् ।

## तस्मै हिते ॥ ७७ ॥

चतुर्थ्यन्ताद्धिते ईयः स्यात् । वत्सीयः (प्राण्यङ्गादिभ्यो यः*) दन्त्यम् ।

## भोगोत्तरपदात्मभ्यामीनः ॥ ७८ ॥

भोगोत्तरपदेभ्य आत्मनश्च हिते ईनः स्यात् । मातृभोगीणः । (ईनेऽध्वात्मनोरन्त्यस्वरादेर्लुग् न स्यात्* ) आत्मनीनः ।

## पञ्चसर्वविश्वाज्जनात्कर्मधारयात् ॥ ७९ ॥

पञ्चादिपूर्वाज्जनान्तात्कर्मधारयाद्धिते ईनः स्यात् । पञ्चजनीनः । विश्वजनीनः (सर्वाण्णो वा* ) सार्वः सर्वीयः ।

इति हिताधिकार ।

अपत्यादिपूर्कार्थेषु प्रागवतः स्त्रीपुंसान्नञ् स्नञ् । स्त्रैणं पौंस्नम् ।

## त्वे वा ॥ ८० ॥

त्वविषये त्वेतौ वा । स्त्रैणं स्त्रीत्वम् । पौंस्नं पुंस्त्वम् ।

## भावे त्वतल् ॥ ८१ ॥

षष्ठ्यन्ताद्भावेऽभिधेये त्वतलौ स्याताम् । शब्दप्रवृत्तिनिमित्तं भावः । गोत्वं गोता ।

## नञ्तत्पुरुषादबुधादेः ॥ ८२ ॥

अबुधादिवर्जादस्मात्त्वतलावेव स्याताम् । अशुक्लत्वं अशुक्लता । अबुधादेरिति किम् । आबुध्यं आचतुर्यम् । ( पृथ्वादेरिमन्वा भावे* )· पृथुमृदुभृशकृशदृढपरिवृढस्य ऋतो रः इमनि णीष्ठेयस्सु च परेषु ।

## त्यन्त्यस्वरादेः ॥ ८३ ॥

तुरन्त्यस्वरादेश्चेमनि ण्यादौ च लुक् स्यात् । प्रथिमा ।

## य्वृवर्णाल्लघ्वादेः ॥ ८४ ॥

लघुरादिः समीपे येषामिउऋवर्णानां तदन्तेभ्यो भावे कर्मणि चाण् स्यात् । पार्थिवम् । त्वतलरूपे चाधिकारादनुवर्तनीये । पृथुत्वम् । पृथुता । म्रदिमा मार्दवम् ।

## प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृद्धवृन्दारकस्येमनि च प्रास्थास्फावरगरबंहत्रपद्राघवर्षवृन्दम् ॥ ८५ ॥

प्रियादीनां दशानां यथासंभवमिमनिणीष्ठेयस्सु च प्रादयो दशादेशा भवन्ति । प्रियस्य भावः प्रेमा प्रियत्वम् प्रियता । स्थेमा २ स्फेमा २ वरिमा २ गरिमा २ बंहिमा २ त्रपिमा २ द्राघिमा २ वर्षिमा २ वृन्दिमा २ ।

## भूर्लुक्चेवर्णस्य ॥ ८६ ॥

वहोरीयसाविम्नि च भूः स्याल्लुक् चानयोरिवर्णस्य । भूमा ।

## स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्यान्तस्थादेर्गुणश्च नामिनः ॥ ८७ ॥

एषां षण्णामिम्नि ष्यादौ चान्तस्थादेरवयवस्य लुग् नामिनश्च गुणः । स्थविमा २ दविमा २ ह्रसिमा २ क्षेपिमा २ क्षोदिमा २ ।

## वर्णदृढादिभ्यष्ट्यण् च वा ॥ ८८ ॥

वर्णविशेषेभ्यो दृढादिभ्यश्च भावे ट्यण् इमन् च वा । शौक्ल्यं शुक्लिमा २ । दार्ढ्यं द्रढिमा २ ।

## पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च ॥ ८९ ॥

पत्यन्तेभ्यो राजान्तेभ्यो गुणः प्रवृत्तिनिमित्तं येषां तेभ्यो राजादिभ्यश्च भावे कर्मणि च ट्यण् स्यात् । अधिपतेर्भावः कर्म वा आधिपत्यम् २ आधिराज्यं २ मौढ्यं २ राज्यं २ काव्यं २ सौभाग्यं २ । भावे कर्मणि च इत्यनुवर्तनीयमधिकारात् ।

## अर्हतस्तोन्त च ॥ ९० ॥

अस्मात् ट्यण् तस्य न्तादेशः । आर्हन्त्यं २ । ( सहायाद्वा ट्यण्* ) साहाय्यम् ।

## योपान्त्याद्गुरूपोत्तमादसुप्रख्यादकञ्॥९१॥

ञ्यादीनामन्त्यमुत्तमं तत्समीपमुपोत्तमं तद्गुरुर्यस्य तस्माद्योपान्त्यात्सुप्रख्यवर्जादकञ् स्यात् । साहायकं २ रामणीयकं २ ( चोरादेरकञ्* ) चौरिका चौरकं चौर्यम् । (सखिवणिग् दूताद्यः*) सख्यं २ वणिज्या वाणिज्यम् २ दूत्यं दौत्यं २ ( स्तेनाद्यो वा नलुक् ये* ) स्तेयं स्तैन्यं २ ( कपिज्ञातेरेयण्* ) कापेयम् । ( प्राणिजातिवयोऽर्थादञ्* ) आश्वं २ कौमारं २ ( युवादेरण्* ) यौवनं २ स्थाविरं २ ( पुरुषहृदयादसमासेऽण्* ) पौरुषम् २ ।

## हृदयस्य हृल्लासलेखाण्ये ॥ ९२ ॥

लासादिषु हृदयस्य हृत्स्यात् । हार्दम् २ समासे तु सुपुरुषत्वम् परमहृदयत्वम् ।

इति भावकर्माधिकारः ।

शाकटादयो यथार्हं क्षेत्रे वाच्याः । इक्षुशाकटं शाकशाकिनं व्रैहेयं मौद्गीनं यव्यं षष्टिक्यं । ( पील्वादेः कुणः पाके* ) ( कर्णादेर्मूले जाहः* ) ( पक्षात्तिर्मूले* ) ( हिमादेलुः सहे* ) ( बलवातादूलः*) (शीतोष्णतृप्रादालुरसहे*) तृप्रं दुःखम् ।

## सर्वादेः पथ्यङ्गकर्मपत्रपात्रशरावं व्याप्नोति ॥ ९३ ॥

सर्वशब्दपूर्वेभ्य एभ्यः षड्भ्यो व्याप्नोतीत्यर्थे ईनः स्यात् । सर्वपथीनो रथः । सर्वाङ्गीणं शं । सर्वकर्मीणो ना । सर्वपत्रीणो यन्ता । सर्वपात्रीणं सर्वशरावीणं घृतम् । (अलङ्गामिन्यध्वनोऽमन्ताधेनौ वाच्यौ *) अध्वन्यः अध्वनीनः । समांसमीनसासपदीनादयः साधवः । (क्वचित्स्वार्थे ईनः *) अपडक्षीणो मन्त्रः । अलङ्कर्मीणोऽलंपुरुषीणो ना ।

## अदिक्स्त्रियां वाञ्चः ॥ ९४ ॥

अञ्चन्तात्स्वार्थे ईनो वा स्यात् । प्राचीनं प्राक् । प्राचीना प्राची शाखा । अदिक्स्त्रियामिति किम् । प्राची दिक् ।

## तस्य तुल्ये कः संज्ञाप्रतिकृत्योः ॥ ९५ ॥

षष्ठ्यन्तात्तुल्येऽर्थेऽनयोर्गम्ययो कः स्यात् । अश्वकः । (शाखादेर्यः *) शाख्यः । मुख्यः । (कुशाग्रादीयः *) कुशाग्रीया मतिः । काकतालीयादयस्तुल्ये साधवः । (विप्रभृतिभ्यः शालशंकटादयः *) विशालं विशंकटम् ।

## तदस्य सञ्जातं तारकादिभ्य इतः ॥ ९६ ॥

एभ्यः सञ्जातार्थेभ्यः षष्ठ्यर्थे इतः स्यात् । तारकाः सञ्जाता अस्य तारकितं नभः । पुष्पितः तरुः । (प्रमाणान्मात्रट् षष्ठ्यर्थे *) आयामः प्रमाणम् । जानुः प्रमाणमस्य जानुमात्रं जलम् । तावन्मात्री भूः ।

## वोर्ध्वं दघ्नट्द्वयसट् ॥ ९७ ॥

ऊर्ध्वप्रमाणादेतौ वा । जानुदघ्नम् जानुद्वयसं जलम् । ( हस्तिपुरुषाद्वाण् प्रमाणे* )

## संयोगादिनः ॥ ९८ ॥

संयोगात्परस्येनोऽण्यन्त्यस्वरादेर्लुग् न स्यात् । हास्तिनं हस्तिमात्रं हस्तिदघ्नं हस्तिद्वयसम् । पौरुषं ३ ( इदंकिमोतुरिय् किय् चास्य माने* ) इदं मानमस्येयान् कियान् पटः । ( यत्तदेतदो डावादिरतुः* ) यावान् तावान् एतावान् ।

## यत्तत्किमः सङ्ख्याया डतिर्वा ॥ ९९ ॥

सङ्ख्यारूपमानवाचिभ्य एभ्यः सङ्ख्येये डतिर्वा स्यात् । यति यावन्तः । तति तावन्तः । कति कियन्तः ।

## अवयवात्तयट् ॥ १०० ॥

अवयववृत्तेः सङ्ख्यार्थादवयविनि तयट् स्यात् । पञ्च अवयवा अस्य पञ्चतयो यमः । चतुष्टयी गतिः (द्वित्रिभ्यामयड् वाऽवयवे*) द्वयं द्वितयम् । त्रयं त्रितयम् ।

## अधिकं तत्सङ्ख्यमस्मिन् शतसहस्रे शतिशदशान्ताया डः ॥ १०१ ॥

शति शदन्तायाः सङ्ख्यायास्तच्छतादिसङ्ख्यं

वस्त्वधिकमित्यर्थे शतसहस्रयोर्डः स्यात्। विंशतिर्योजनानामधिकास्मिन्निति विंशं त्रिंशं द्वादशं योजनशतं योजनसहस्रं वा।

## सङ्ख्यापूरणे डट्॥ १०२॥

सङ्ख्या पूर्यते येन तस्मिन्नर्थे सङ्ख्याया: डट् स्यात्। द्वादशानां सङ्ख्यापूरणः द्वादशः। (विंशत्यादेर्वा तमट् पूरणे*) विंशतितमः। सहस्रतमः शततमः (षष्ठ्यादेरसङ्ख्यादेस्तमट्*) षष्टितमः। सङ्ख्यादेस्तु डट्। द्विसप्ततः।

## नो मट्॥ १०३॥

नान्ताया: सङ्ख्यायाः पूरणे मट् स्यात्। पञ्चमः। सङ्ख्यादेस्तु डः। षोडशः।

## पित्तिथट् बहुगणपूगसङ्घात्॥ १०४॥

एभ्यस्तिथट् स्यात् (अतोरिथट् पूरणे*) तौ च पितौ। बहुतिथः।

## क्यङ्मानिपित्तद्धिते॥ १०५॥

एषु त्रिष्वनूङ्परतः स्त्री पुंवत्स्यात्। बह्वीनां सङ्ख्यापूरणी बहुतिथी। यावतिथः। यावतिथी। (षट्कतिकतिपयात् थट् पूरणे*) षष्ठः कतिथः। (चतुरस्थट्*) चतुर्थः। (येयौ च लुक् च*) चतुरः। तुर्यः। तुरीयः। (द्वेस्तीयः*) द्वितीयः।

## वोर्ध्वे दघ्नट्द्वयसट् ॥ ९७ ॥

ऊर्ध्वप्रमाणादेतौ वा । जानुदघ्नम् जानुद्वयसं जलम् । ( हस्तिपुरुषाद्वाण् प्रमाणे* )

## संयोगादिनः ॥ ९८ ॥

संयोगात्परस्येनोऽण्यन्त्यस्वरादेर्लुग् न स्यात् । हास्तिनं हस्तिमात्रं हस्तिदघ्नं हस्तिद्वयसम् । पौरुषं ३ ( इदंकिमोतुरिय् किय् चास्य माने * ) इदं मानमस्येयान् कियान् पटः । ( यत्तदेतदो डा वादिरतुः* ) यावान् तावान् एतावान् ।

## यत्तत्किमः सङ्ख्याया डतिर्वा ॥ ९९ ॥

सङ्ख्यारूपमानवाचिभ्य एभ्यः सङ्ख्येये डतिर्वा स्यात् । यति यावन्तः । तति तावन्तः । कति कियन्तः ।

## अवयवात्तयट् ॥ १०० ॥

अवयववृत्तेः सङ्ख्यार्थादवयविनि तयट् स्यात् । पञ्च अवयवा अस्य पञ्चतयो यमः । चतुष्टयी गतिः (द्वित्रिभ्यामयट् वाऽवयवे*) द्वयं द्वितयम् । त्रयं त्रितयम् ।

## अधिकं तत्सङ्ख्यमस्मिन् शतसहस्रे शतिशदशान्ताया डः ॥ १०१ ॥

शति शदन्तायाः सङ्ख्यायास्तच्छतादिसङ्ख्यं

वस्त्वधिकमित्यर्थे शतसहस्रयोर्डः स्यात् । विंश-तिर्योजनानामधिकास्मिन्निति विंशं त्रिंशं द्वादशं योजनशतं योजनसहस्रं वा ।

## सङ्ख्यापूरणे डट् ॥ १०२ ॥

सङ्ख्या पूर्यते येन तस्मिन्नर्थे सङ्ख्यायाः डट् स्यात् । द्वादशानां सङ्ख्यापूरणः द्वादशः । (विंश-त्यादेर्वा तमट् पूरणे *) विंशतितमः । सहस्रतमः शततमः ( षष्ट्यादेरसङ्ख्यादेस्तमट् * ) षष्टितमः । सङ्ख्यादेस्तु डट् । द्विसप्ततः ।

## नो मट् ॥ १०३ ॥

नान्तायाः सङ्ख्यायाः पूरणे मट् स्यात् । प-ञ्चमः । सङ्ख्यादेस्तु डः । षोडशः ।

## पित्तिथट् बहुगणपूगसङ्घात् ॥ १०४ ॥

एभ्यस्तिथट् स्यात् (अतोरिथट् पूरणे*) तौ च पितौ । बहुतिथः ।

## क्यङ्मानिपित्तद्धिते ॥ १०५ ॥

एषु त्रिष्वनूङ्परतः स्त्री पुंवत्स्यात् । बह्वीनां सङ्ख्यापूरणी बहुतिथी । यावतिथः । यावतिथी । ( षट्कतिकतिपयात् थट् पूरणे * ) षष्ठः कतिथः । ( चतुरस्थट् * ) चतुर्थः । ( येयौ च लुक् च * ) चतुरः । तुर्यः । तुरीयः । ( द्वेस्तीयः * ) द्वितीयः ।

## त्रेस्तृ च ॥ १०६ ॥

त्रेस्तीयस्तृत्वं चास्य । तृतीयः ।

## पूर्वमनेन सादेश्चेन् ॥ १०७ ॥

द्वितीयान्तात्सपूर्वात्केवलाच्च पूर्वशब्दात्तृतीयार्थे इन् स्यात् । कृतं पूर्वमनेन कृतपूर्वी कटं । पीतपूर्वी पयः ।

## इष्टादेः ॥ १०८ ॥

एभ्यः प्रथमान्तेभ्यस्तृतीयार्थे कर्तरि इन् स्यात् । इष्टो यज्ञोऽनेन इष्टी यज्ञे । अधीतस्तर्कोऽनेन अधीती तर्के ।

## तेन वित्ते चञ्चुचणौ ॥ १०९ ॥

तृतीयान्तात् ख्याते एतौ स्याताम् । विद्याचञ्चुः । केशचणः ।

## तदस्यास्त्यस्मिन्निति मतुः ॥ ११० ॥

प्रथमान्तात्पष्ठ्यर्थे सप्तम्यर्थे वा मतुः स्यात् । प्रथमान्तं चेदस्तीत्युच्यते । गावोऽस्य सन्ति गोमान् ।

## मावर्णान्तोपान्त्यापञ्चमवर्गा-न्मतोर्मो वः ॥ १११ ॥

## नोर्म्यादिभ्यः ॥ ११२ ॥

एभ्यो मतोर्मो वो न स्यात् । ऊर्मिमान् । ( उदन्वान् जलाधारे * )

## राजन्वान् सुराज्ञि ॥ ११३॥

सुराजकेऽर्थे राजन्वान् । संज्ञायां चर्मण्वत्यादयश्च साधवः । ( नावादेरिकः * ) नाविकः । मत्वन्तं च रूपं सर्वत्राधिकारादनुवर्तनीयम् । नौमान् । ( शिखादिभ्य इन् * ) शिखी माली ( व्रीह्यादिभ्य इकेनौ * ) व्रीहिकः व्रीही ।

## अतोऽनेकस्वरात् ॥ ११४ ॥

अदन्तादनेकस्वरादिकेनौ स्याताम् । धनिकः धनी । ( इलेनाण्श्नरादयो यथायोगं मत्वर्थे वाच्याः * ) तुन्दिलः फेनिलः शृङ्गिणः ज्योत्स्नी प्राज्ञः श्राद्धः लोमशः पामनः मधुरम् मरुत्तः ।

## नस्तं मत्वर्थे ॥११५॥

सान्तं तान्तं च नाम मत्वर्थे परे पदं न स्यात् । मरुत्वान् । ( वलवातदन्तललाटादूलः * ) वतूलः । ( प्राण्यङ्गादातो लः * ) चूडालः । ( सिध्मादिक्षुद्रजन्तुरुग्भ्योऽपि * ) । सिध्मलः यूकालः मूर्च्छालः । ( प्रज्ञापर्णोदकफेनाल्लेलौ * ) प्रज्ञालः प्रज्ञिलः । ( वाचः आलाटौ क्षेपे * ) वाचालः वाचाटः । ( वाचो ग्मिन् * ) वाग्मी । ( लक्ष्म्या

अनः * ) लक्ष्मणः । ( कच्छ्वा डुरः * ) कच्छुरः । ( दन्तादुन्नतात् * ) उन्नता दन्ता अस्य सन्ति दन्तुरः । ( कृपाहृदयादालुः * ) कृपालुः ।

## अभ्रादिभ्यः ॥ ११६ ॥

एभ्यो मत्वर्थे अः स्यात् । अभ्रं नभः । अर्शसो मैत्रः ।

## अस्तपोमायामेधास्रजो विन् ॥ ११७ ॥

असन्तात्तपःप्रभृतिभ्यश्च विन् स्यात् । यचस्वी तपस्वी मायावी । व्रीह्यादित्वान्मायिकः । मायी मेधावी । ( मेधारथान्नवेरः * ) मेधिरः रथिरः रथिकः । स्रग्वी ।

## आमयाद्दीर्घश्च ॥ ११८ ॥

अस्माद्विन्प्रत्ययः स्यात् दीर्घश्चास्य । आमयावी । ( स्वान्मिन्नीशे दीर्घश्च * ) स्वामी । ( गोः * ) गोमी । ( ऊर्जो विन्वलावस् चान्तः * ) ऊर्जस्वी ऊर्जस्वलः ऊर्वान् ।

## सर्वादेरिन् ॥ ११९ ॥

सर्वादेरदन्तात्कर्मधारयादिन् स्यात् । सर्वधनी ।

## वातातीसारपिशाचात् कश्चान्तः ॥ १२० ॥

एभ्यस्त्रिभ्य इन् कोन्तश्च । वातकी ।

इति मत्वर्थीया ।

( प्राचुर्यप्राधान्यादिषु यथार्हं मयड्वाच्यः * ) अपूपमयं पर्व । ( प्रकारे जातीयर् * ) महाजातीयः । ( भूतपूर्वे च्चरट् * ) पूर्वं भूतो भूतपूर्वः । भूतपूर्वा । आढ्या आढ्यचरी । ( निन्द्ये पाशप् * ) छान्दसपाशः । ( प्रकृष्टे तमप् * ) अयमेषां प्रकृष्टः शुक्लः शुक्लतमः ।

## द्वयोर्विभज्ये च तरप् ॥ १२१ ॥

द्वयोर्मध्ये प्रकृष्टे विभज्ये च तरप् स्यात् । इयं पट्वी इयं पट्वी इयमनयोः प्रकृष्टा पट्वी पटुतरा । सौघ्नेभ्यो माथुरा आढ्यतराः । ( क्वचित्स्वार्थे यथालक्ष्यं तरप् ) अभिन्नतरकम् ।

## किंत्याद्येऽव्ययादसत्वे तयोरन्तस्याम् १२२

किमस्त्याद्यन्तादेदन्तादव्ययाच्च परयोस्तमस्तरपोरन्तस्याम् स्यात् न चेत्तौ सत्वे द्रव्ये वर्तेते । कितमां कितराम् । अयमेषां प्रकृष्टं पचति पचतितमाम् । अयमनयोः प्रकृष्टं पचति पचतितराम् । पूर्वाह्णेतराम् पूर्वाह्णेतमाम् । अतितराम् अतितमाम् भुङ्क्ते । असत्वे किम् । किंतरं दारु ।

## गुणाङ्गाद्वेष्ठेयसू ॥ १२३ ॥

गुणप्रवृत्तिहेतुकात्तमप्तरपोर्विषये यथासङ्ख्यमेतौ वा स्याताम् । अयमेषां प्रकृष्टः पटुः पटिष्ठः पटुतमः । अयमनयोः प्रकृष्टः पटुः पटीयान् पटु-

अनः * ) लक्ष्मणः । ( कच्छ्वा डुरः * ) कच्छुरः । ( दन्तादुन्नतात् * ) उन्नता दन्ता अस्य सन्ति दन्तुरः । ( कृपाहृदयादालुः * ) कृपालुः ।

### अभ्रादिभ्यः ॥ ११६ ॥

एभ्यो मत्वर्थे अः स्यात् । अभ्रं नभः । अर्शसो मैत्रः ।

### अस्तपोमायामेधास्रजो विन् ॥ ११७ ॥

असन्तात्तपःप्रभृतिभ्यश्च विन् स्यात् । वचस्वी तपस्वी मायावी । व्रीह्यादित्वान्मायिकः । मायी मेधावी । ( मेधारथान्नवेरः * ) मेधिरः रथिरः रथिकः । स्रग्वी ।

### आमयाद्दीर्घश्च ॥ ११८ ॥

अस्माद्विन्प्रत्ययः स्यात् दीर्घश्चास्य । आमयावी । ( स्वान्मिन्नीशे दीर्घश्च * ) स्वामी । ( गोः * ) गोमी । ( ऊर्जो विन्वलावस् चान्तः * ) ऊर्जस्वी ऊर्जस्वलः ऊर्ग्वान् ।

### सर्वादेरिन् ॥ ११९ ॥

सर्वादेरदन्तात्कर्मधारयादिन् स्यात् । सर्वधनी ।

### वातातीसारपिशाचात् कश्चान्तः ॥ १२० ॥

एभ्यस्त्रिभ्य इन् कोन्तश्च । वातकी ।

इति मत्वर्थीयाः ।

( प्राचुर्यप्राधान्यादिषु यथार्हं मयड्वाच्यः * ) अपूपमयं पर्व । ( प्रकारे जातीयर् * ) महाजातीयः । ( भूतपूर्वे च्चरट् * ) पूर्वं भूतो भूतपूर्वः । भूतपूर्वा । आढ्या आढ्यचरी । ( निन्द्ये पाशप् * ) छान्दसपाशः । ( प्रकृष्टे तमप् * ) अयमेषां प्रकृष्टः शुक्लः शुक्लतमः ।

द्वयोर्विभज्ये च तरप् ॥ १२१ ॥

द्वयोर्मध्ये प्रकृष्टे विभज्ये च तरप् स्यात् । इयं पट्वी इयं पट्वी इयमनयोः प्रकृष्टा पट्वी पटुतरा । सौघ्नेभ्यो माथुरा आढ्यतराः । ( क्वचित्स्वार्थे यथालक्ष्यं तरप् ) अभिन्नतरकम् ।

किंत्याद्येऽव्ययादसत्वे तयोरन्तस्याम् १२२

किमस्त्याद्यन्तादेदन्तादव्ययाच्च परयोस्तमप्तरपोरन्तस्याम् स्यात् न चेत्तौ सत्वे द्रव्ये वर्तेते । किंतमा किंतराम् । अयमेषा प्रकृष्टं पचति पचतितमाम् । अयमनयोः प्रकृष्टं पचति पचतितराम् । पूर्वाह्णेतराम् पूर्वाह्णेतमाम् । अतितराम् अतितमाम् भुङ्क्ते । असत्वे किम् । किंतरं दारु ।

गुणाङ्गाद्वेष्ठेयसू ॥ १२३ ॥

तरः। (प्रशस्यस्य श्रः णीष्ठेयस्सु *) प्रकृष्टः प्रशस्यः श्रेष्ठः श्रेयान्। (वृद्धप्रशस्ययोर्ज्यः *) ज्येष्ठः ज्यायान्। अयमीयसौ साधुः। (अल्पयूनोः कन्वाः *) कनिष्ठः २ अल्पिष्ठः २ यविष्ठः २ (बाढान्तिकयोः साधनेदौ ण्यादिषु *) प्रकृष्टो बाढः साधिष्ठः साधीयान्। प्रकृष्टोऽन्तिको नेदिष्ठः नेदीयान्। प्रियस्थिरेत्यादिना प्रियादीनां प्राद्यादेशे। प्रकृष्टः प्रियः प्रेष्ठः प्रेयान्। स्थेष्ठः स्थेयान्। (बहोर्णीष्ठे भूय् *) भूयिष्ठः। ईयसौ (भूर्लुक् चेवर्णस्य *) भूयान्। स्थूलदूरेत्यादिना स्थूलादीनामन्तस्थादिलोपे नामिनो गुणे च स्थविष्ठः स्थवीयान्। दविष्ठः दवीयान्। (विन्मतोर्णीष्ठेयसौ लुप् *) प्रकृष्टः स्रग्वी स्रजिष्ठः। एवं त्वचिष्ठः।

त्यादेश्च प्रशस्ते रूपप्॥ १२४॥

त्याद्यन्तान्नाम्नश्च प्रशस्ते रूपप् स्यात्। पचतिरूपम् वैयाकरणरूपः। (तरबादिषु क्वचिद् ह्रस्वपुंवद्भावौ वा वक्तव्यौ *) पचन्तितरां पचत्तरां पचन्तीतराम्।

अतमबादेरीषदसमाप्ते कल्पप् देश्यप् देशीयर्॥ १२५॥

तमबाद्यन्तवर्जात्त्याद्यन्तान्नाम्नश्च किंचिदुनेऽर्थे

त्रयः स्युः । पचतिकल्पं पचतिदेश्यं पचतिदेशीयम् । पटुकल्पा पटुदेश्या पटुदेशीया । ( नाम्नः प्राग्बहुर्वा किञ्चिदूने * ) बहुपटुः पटुकल्पः । ( कुत्सिताल्पाज्ञातादिषु यथार्हं कवादयो वाच्याः * ) अश्वकः । अनुकम्पायां पुत्रक एहकि । ( एकादाकिन् चाऽसहाये * ) एकाकी एककः ।

## त्यादिसर्वादेः स्वरेष्वन्त्यात्पूर्वोऽक् ॥ १२६ ॥

त्याद्यन्तात्सर्वादेश्चान्त्यस्वरात्पूर्वोऽक् स्यात् कुत्सितादिषु । पचतकि सर्वके इति ।

## युष्मदस्मदोऽसोभादिस्यादेः ॥ १२७ ॥

सकारादिओकारादिभकारादिवर्जितस्याद्यन्तयोर्युष्मदस्मदोरन्त्यस्वरादेः पूर्वोऽक् स्यात् । त्वयका मयका । सकारादिवर्जनात् युष्मकासु अस्मकासु । युवकयोः आवकयोः । युवकाभ्याम् आवकाभ्याम् ।

## अव्ययस्य को द् च ॥ १२८ ॥

अस्यान्त्यस्वरात्पूर्वोऽक् तद्योगे को द् च । कुत्सिताद्युच्चैरुच्चकैः धिक् धकिद् । ( वैकाद्‍द्वयोर्निर्धार्ये डतरः * ) एकतर एकको वा भवतोः कठः पटुः ।

## यत्तत्किमन्यात् ॥ १२९ ॥

एभ्यो द्वयोरेकस्मिन्निर्धार्ये डतरः स्यात् । यतरो भवतोः कठादिस्ततर आगच्छेत् ।

वहूनां प्रश्ने डतमश्च वा ॥ १३० ॥

यदादिभ्यो वहूनां मध्ये निर्धार्यार्थेभ्यः प्रश्ने डतमो डतरश्च वा स्यात् । यतमो यतरो वा भवतां कठादिस्ततमस्ततरो वा यातु । एवं कतमः कतरः । अन्यतमः अन्यतरः । पक्षे यको यो वेत्यादि । (वैकात् तमप्तथा *) एकतमः एककः एको वा भवतां कठादिः । (प्रायोऽतोर्द्वयसट् मात्रट् स्वार्थे *) यावदेव यावद्द्वयसम् । यावन्मात्रम् ।

तीयाट्टीकण् न विद्या चेत् ॥ १३१ ॥

तीयान्तात् स्वार्थे टीकण् वा स्यात् । द्वैतीयीकं तार्तीयीकी । विद्या तु द्वितीया । (वर्णाऽव्ययात्स्वरूपे कारः *) ककारः (रादेफः *) रेफः । (नामरूपभागाद्धेयः * ) नामधेयम् । (देवात्तल् *) देवता । (भेपजादिभ्यष्ट्यण् *) भैपज्यम् । (प्रज्ञादिभ्योऽण् *) प्राज्ञः वाणिजः । (वाच इकणसन्दिष्टे *) वाचिकम् । (उपायादिकण् ह्रस्वश्चास्य *) औपयिकम् । (विनयादिभ्य इकण् वा भवति *) वैनयिकम् । इति तद्धितदिग्मात्रम् ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां प्रथमवृत्तिः समाप्ता ।

हैमलघुप्रक्रियाव्याकरणे पूर्वार्द्धं समाप्तम् ॥

# हैमलघुप्रक्रियाव्याकरणम् ।

## अथ उत्तरार्द्धम् ॥

॥ श्रीजिनाय नमः ॥

अथाख्यातप्रक्रिया निरूप्यते । आख्यातप्रत्ययाश्च धातोर्वक्तव्याः ।

### क्रियार्थो धातुः ॥ १ ॥

कृतिः क्रिया पठनपचनादिरूपा साऽर्थो यस्य स धातुः स्यात् । स च त्रेधा गणजो नामजः सौत्रश्च । आद्यो नवधा । तथाहुः ।

अदादयः कानुबन्धाश्चानुबन्धा दिवादयः ।
स्वादयष्टानुबन्धाश्च तानुबन्धास्तुदादयः ॥ १ ॥
रुधादयः पानुबन्धा यानुबन्धास्तनादयः ।
क्र्यादयः शानुबन्धाश्च णानुबन्धाश्चुरादयः ॥२॥

उक्तानुबन्धरहिता भ्वादयः । यत्र नामैव प्रत्ययसंबन्धाद्धातुत्वं याति स नामधातुः । सौत्राश्च कण्ड्वादयो दोलणप्रमुखाश्च । प्रत्येकमेते त्रिविधाः परस्मैपदिन आत्मनेपदिन उभयपदिनश्च ।

ङनुबन्ध इदनुबन्धः कर्तर्यप्यात्मनेपदी धातुः ।
ईगनुबन्धस्तूभयपदी परस्मैपदी शेषः ॥ ३ ॥

## नवाद्यानि शतृक्वसू च परस्मैपदम् ॥ २ ॥

सर्वासां त्यादिविभक्तीनामाद्यानि नववचनानि शतृक्वसू च प्रत्ययौ परस्मैपदसंज्ञानि स्युः । ( प-राणि कानानशौ चात्मनेपदम् * )

## त्रीणि त्रीण्यन्ययुष्मदस्मदि ॥ ३ ॥

सर्वासां विभक्तीनां त्रीणि त्रीण्येकद्विबहुवचनान्यन्यदर्थे युष्मदर्थेऽस्मदर्थे च यथाक्रमं स्युः ।

## सति ॥ ४ ॥

आरब्धासमाप्तवस्तुविषयः कालः सन् वर्तमानस्तदर्थाद्धातोर्वर्तमाना स्यात् ।

वर्तमाना ।

| परस्मैपदानि । | | | आत्मनेपदानि । | | |
|---|---|---|---|---|---|
| तिव् | तस् | अन्ति । | ते | आते | अन्ते । |
| सिव् | थस् | थ । | से | आथे | ध्वे । |
| मिव् | वस् | मस् । | ए | वहे | महे । |

## एताः शितः ॥ ५ ॥

वर्तमाना सप्तमीपञ्चमीह्यस्तन्यः शितो ज्ञेयाः । भू सत्तायाम् । भू तिव् इति स्थिते । वकारो वि-त्कार्यार्थः ।

## कर्तर्यनद्भ्यः शव् ॥ ६ ॥

अदादिवर्जाद्धातोः कर्तरि विहिते शिति शव् प्रत्ययः स्यात् । शकारवकारावितौ ।

## नामिनो गुणोऽक्ङिति ॥ ७ ॥

कित्ङित्वर्जे प्रत्यये परे नाम्यन्तस्य धातोर्गुणः स्यात् । अवादेशे, स धार्मिको भवति । तौ भवतः । लुगस्यादेत्यपदे इत्यकारलोपे, ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ ।

## मव्यस्याः ॥ ८ ॥

धातोर्विहिते मादौ वादौ च प्रत्यये परे अत आः स्यात् । अहं भवामि । आवां भवावः । वयं भवामः । अन्यदर्थादिद्वयत्रययोगे पराश्रयमेव वचनम् । स च त्वं च भवथः । स च त्वं चाहं च भवामः ।

## विधिनिमन्त्रणाधीष्टसंप्रश्नप्रार्थने ॥ ९ ॥

विधिः क्रियायां प्रेरणा । विध्यादिषु सप्तमी स्यात् । संभावनादिष्वपि सप्तमी ।

सप्तमी ।

| परस्मैपदिनः । | | | आत्मनेपदिनः । | | |
|---|---|---|---|---|---|
| यात् | याताम् | युस् । | ईत | ईयाताम् | ईरन् । |
| यास् | यातम् | यात । | ईथास् | ईयाथाम् | ईध्वम् । |
| याम् | याव | याम । | ईय | ईवहि | ईमहि । |

## यः सप्तम्याः ॥ १० ॥

आत् परस्य सप्तम्या याशब्दस्य इः स्यात् ।

शिष्यो गुरुसेवी भवेत्। भवेदसौ भव्यः श्राद्धत्वात्। भवेताम्। (आत्वरयोर्याम्युसोरियमियुसौ *) भवेयुः। भवेः भवेतम् भवेत। भवेयम् भवेव भवेम।

## प्रैषाऽनुज्ञावसरे कृत्यपञ्चम्यौ ॥ ११ ॥

न्यत्कारपूर्विका प्रेरणा प्रैषः। प्रैषादिषु कृत्याः पञ्चमी च स्युः। (विध्यादिषु आशिषि च पञ्चमी वक्तव्या *)

पञ्चमी।

| परस्मैपदिनः। | | | आत्मनेपदिनः। | | |
|---|---|---|---|---|---|
| तुव् | ताम् | अन्तु। | ताम् | आताम् | अन्ताम्। |
| हि | तम् | त। | स्व | आथाम् | ध्वम्। |
| आनिव् | आवव् | आमव्। | ऐव् | आवहैव् | आमहैव्। |

अध्ययनोद्यतो भवतु चैत्रः। भवताम्। भवन्तु। (आशिषि तुह्योस्तातङ् वा *) आयुष्मान् भवतु भवतात् भवान्।

## अतः प्रत्ययालुक् ॥ १२ ॥

धातोः परो योऽदन्तः प्रत्ययस्ततः परस्य हेर्लुक् स्यात्। भव भवतात् भवतम् भवत। आशिषि श्रेयस्वी भवतात्सौम्य। भवानि भवाव भवाम।

## अनद्यतने ह्यस्तनी ॥ १३ ॥

आन्याय्यादुत्थानादान्याय्याच्च संवेशनादहरुभयतः सार्धरात्रं वाद्यतनः कालस्ततोऽन्योऽनद्यतनस्तस्मिन् भूतार्थाद्धातोर्ह्यस्तनी स्यात् । ख्याते दृश्ये लोकविज्ञाते प्रयोक्तुः शक्यदर्शने परोक्षेऽपि भूतानद्यतने ह्यस्तनी स्यात् ।

ह्यस्तनी ।

| परस्मैपदिनः । | | | आत्मनेपदिनः । | | |
|---|---|---|---|---|---|
| दिव् | ताम् | अन् । | त | आताम् | अन्त । |
| सिव् | तम् | त । | थास् | आथाम् | ध्वम् । |
| अम्व् | व | म । | इ | वहि | महि । |

दिस्योरिकार उच्चारणार्थः ।

### अड्धातोरादिर्ह्यस्तन्यां चामाडा ॥ १४ ॥

ह्यस्तन्यामद्यतनीक्रियातिपत्त्योश्च विषये धातोरादिरट् स्यात् नतु माङ्योगे । अभवद् द्यो जिनार्चा । विरामे वा । अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम ।

### अविवक्षिते ॥ १५ ॥

परोक्षत्वेनाविवक्षिते परोक्षे भूतानद्यतने ह्यस्तनी स्यात् । अभवद्वीरः ।

### स्मे च वर्तमाना ॥ १६ ॥

भूतानद्यतने वर्तमानाद्धातोः स्मे पुरादौ चोपपदे वर्तमाना स्यात् । शिष्यास्तव भवन्ति स्म । पुरा भवति ते पदम् । अभवदित्यर्थः ।

अद्यतनी ॥ १७ ॥

अद्यतनकाले भूतार्थाद्धातोरद्यतनी स्यात् ।

विशेषाऽविवक्षाव्यामिश्रे ॥ १८ ॥

अद्यतनादिविशेषाऽविवक्षायां व्यामिश्रणे च सति भूतार्थाद्धातोरद्यतनी स्यात् ।

अद्यतनी ।

| परस्मैपदिनः । | | | आत्मनेपदिनः । | | |
|---|---|---|---|---|---|
| दि | ताम् | अन् । | त | आताम् | अन्त । |
| सि | तम् | त । | थास् | आथाम् | ध्वम् । |
| अम् | व | म । | इ | वहि | महि । |

सिजद्यतन्याम् ॥ १९ ॥

अद्यतन्यां परस्यां धातोः परः सिच् स्यात् । इकार उच्चारणार्थः । चकारो विशेषार्थः ।

पिबैतिदाभूस्थः सिचो लुप् परस्मै न चेट् ॥ २० ॥

देति दासंज्ञा धातवः । एभ्यः परस्य सिचः परस्मैपदे लुप् स्यात् लुग्योगे न चेट् ।

भवतेः सिज्लुपि ॥ २१ ॥

सिचो लुपि भवतेर्गुणो न स्यात् । अड् धातो-रित्यडागमे । अभूत् अद्य वृष्टिः । अभूताम् । अभू अन् इति स्थिते । सिज्लोपे धातोरिवर्णस्ये-त्युवादेशे ।

## भुवो वः परोक्षाऽद्यतन्योः ॥ २२ ॥

भुवो वन्तस्योपान्त्यस्य परोक्षाद्यतन्योरुत् स्यात् । अभूवन् । अभूः अभूतम् अभूत । अभू-वम् अभूव अभूम ।

## परोक्षे भूतानद्यतने ॥ २३ ॥

परोक्षार्थाद्धातोः परोक्षा स्यात् ।

परोक्षा ।

| परस्मैपदिनः । | | | आत्मनेपदिनः । | | |
|---|---|---|---|---|---|
| णव् | अतुस् | उस् । | ए | आते | इरे । |
| थव् | अथुस् | अ । | से | आथे | ध्वे । |
| णव् | व | म । | ए | वहे | महे । |

भू णव् इति स्थिते णकारो वृद्ध्यर्थः ।

## द्विर्धातुः परोक्षा ङे प्राक् तु स्वरे स्वर-विधेः ॥ २४ ॥

परोक्षायां ङे च परे धातुर्द्विः स्यात् । स्वरादौ तु द्वित्वनिमित्ते स्वरस्य कार्यात्प्रागेव ।

## भूस्वपोरदुतौ ॥ २५ ॥

भूस्वपोः परोक्षायां द्वित्वे पूर्वस्य यथासङ्ख्यमदुतौ स्याताम् ।

## द्वितीयतुर्ययोः पूर्वौ ॥ २६ ॥

द्वित्वे पूर्वयोर्द्वितीयतुर्ययोर्यथासङ्ख्यमाद्यतृतीयौ स्याताम् ।

## नामिनोऽकलिहलेः ॥ २७ ॥

नाम्यन्तस्य धातोर्नाम्नो वा कलिहलिवर्जस्य ञ्णिति वृद्धिः स्यात् । तत आवादेशे भुवो व इत्यूत्वे च । बभूव श्रीवीरः । बभूवतुः बभूवुः ।

## स्कृसृवृभृस्तुद्रुश्रुस्रोर्व्यञ्जनादेः परोक्षायाः ॥ २८ ॥

स्कृगः स्रादिवर्जेभ्यश्च सर्वधातुभ्यः परस्या व्यञ्जनादेः परोक्षाया आदिरिट् स्यात् । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम ।

## कृतास्मरणाऽतिनिह्नवे परोक्षा ॥ २९ ॥

अनयोरर्थयोरपरोक्षेऽपि भूते परोक्षा स्यात् । सुप्तोऽहं किल विललाप । नाहं कलिङ्गं जगाम ।

## आशिष्याशीःपञ्चम्यौ ॥ ३० ॥

परस्येष्टाशंसनमाशीस्तदर्थाद्धातोराशीःपञ्चम्यौ स्याताम् ।

आशीः ।

| परस्मैपदानि । | आत्मनेपदानि । |
|---|---|
| क्यात् क्यास्तां क्यासुः । | सीष्ट सीयास्तां सीरन् । |
| क्याः क्यास्तं क्यास्त । | सीष्ठास् सीयास्थां सीध्वं । |
| क्यासं क्यास्व क्यास्म । | सीय सीवहि सीमहि । |

ककारो गुणनिषेधार्थः । भूयाद्भद्रं सद्भ्यः । भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म ।

## अनद्यतने श्वस्तनी ॥ ३१ ॥

अनद्यतने भविष्यदर्थाद्धातोः श्वस्तनी स्यात् ।

श्वस्तनी ।

| परस्मैपदिनः । | आत्मनेपदिनः । |
|---|---|
| ता तारौ तारस् । | ता तारौ तारस् । |
| तासि तास्थस् तास्थ । | तासे तासाथे ताध्वे । |
| तास्मि तास्वस् तास्मस् । | ताहे तास्वहे तास्महे । |

## स्ताद्यशितोऽत्रोणादेरिट् ॥ ३२ ॥

धातोः परस्य सादेस्तादेश्चाऽशित आदिरिट् स्यात् नतु त्रप्रत्यये उणादिषु च । भविता श्वः पूजोत्सवः । भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः ।

## भविष्यन्ती ॥ ३३ ॥

सामान्यतो भविष्यदर्थाद्धातोर्भविष्यन्ती स्यात्।

भविष्यन्ती।

| परस्मैपदिनः। | | | आत्मनेपदिनः। | | |
|---|---|---|---|---|---|
| स्यति | स्यतस् | स्यन्ति। | स्यते | स्येते | स्यन्ते। |
| स्यसि | स्यथस् | स्यथ। | स्यसे | स्येथे | स्यध्वे। |
| स्यामि | स्यावस् | स्यामस्। | स्ये | स्यावहे | स्यामहे। |

इडागमे। भविष्यति भविष्यतः भविष्यन्ति। भविष्यसि भविष्यथः भविष्यथ। भविष्यामि भविष्यावः भविष्यामः।

## पुरायावतोर्वर्तमाना ॥ ३४ ॥

अनयोरुपपदयोर्भविष्यदर्थाद्धातोर्वर्तमाना स्यात्। पुरा भवति। यावद्भवति। भविष्यतीत्यर्थः। (कदाकर्ह्योर्न वा*) कदा भवति। कदा भविष्यति। कर्हि भवति कर्हि भविष्यति।

## माङ्यद्यतनी ॥ ३५ ॥

माङ्युपपदे धातोरद्यतनी स्यात्। सर्वविभक्त्यपवादः। माङ्योगेऽडागमाभावः। मा भूत्।

## सस्मे ह्यस्तनी च ॥ ३६ ॥

सस्मे माङ्युपपदे ह्यस्तनी अद्यतनी च स्यात्। मा स्म भवत् मा स्म भूत्।

## अयदि स्मृत्यर्थे भविष्यन्ती ॥ ३७ ॥

स्मृत्यर्थे धातावुपपदे भूतानद्यतनार्थे भविष्यन्ती स्यात् नतु यद्योगे । स्मरसि साधो सिद्धाद्रौ तपस्विनो भविष्यामः । यद्योगे तु । स्मरसि यत्तत्र तपस्विनोऽभवाम ।

## धातोः सम्बन्धे प्रत्ययाः ॥ ३८ ॥

धात्वर्थानां विशेषणविशेष्यभावे सति यथाकालमपि प्रत्ययाः साधवः स्युः । विश्वदृश्वाऽस्य पुत्रो भविता । भावि कृत्यमासीत् ।

## प्रचये नवा सामान्यार्थस्य ॥ ३९ ॥

धात्वर्थानां च समुच्चये गम्ये सामान्यार्थस्य धातोः संबन्धे सति धातोः परौ हिस्वौ तध्वमौ च तद्युष्मदि वा स्याताम् । व्रीहीन् वप लुनीहि पुनीहि इत्येवं यतते यत्यते वा । पक्षे वपति लुनातीत्येवं यतते यत्यते वा । सूत्रमधीष्व निर्युक्तिमधीष्व भाष्यमधीष्वेत्येवमधीते । पक्षे सूत्रमधीते निर्युक्तिमधीते इत्येवमधीते । एवं तध्वमोरप्युदाहरणानि । यथाविधि धातोः संबन्धे सति भृशाभीक्ष्ण्येऽप्येवम् । लुनीहि पुनीहीत्येवायं लुनाति । अधीष्वाधीष्वेत्येवमयमधीते इत्यादि ।

## सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः ॥ ४० ॥

सप्तम्या अर्थो निमित्तं हेतुफलादि सामग्री

कुतश्चिद्वैगुण्यात्क्रियानभिनिर्वृत्तौ सत्यामेष्यदर्थाद्धातोः सप्तम्यर्थे क्रियातिपत्तिः स्यात्।

क्रियातिपत्तिः।

| परस्मैपदिनः। | आत्मनेपदिनः। |
|---|---|
| स्यत् स्यताम् स्यन्। | स्यत स्येताम् स्यन्त। |
| स्यस् स्यतम् स्यत। | स्यथास् स्येथाम् स्यध्वम्। |
| स्यम् स्याव स्याम। | स्ये स्यावहि स्यामहि। |

सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्। अभविष्यताम् अभविष्यन्। अभविष्यः अभविष्यतम् अभविष्यत। अभविष्यम् अभविष्याव अभविष्याम। पां पाने। अनुस्वार इडूनिषेधार्थः।

## श्रौतिकवुधिवुपाघ्राध्मास्थाम्नादाम्दृश्यर्तिशदसदः शृकृधिपिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदम्॥ ४१॥

श्रौत्यादीनां त्रयोदशानां शिति शृप्रभृतयस्त्रयोदशादेशाः स्युः। पिबति पिबतः पिबन्ति १। पिबेत् पिबेताम् पिबेयुः। पिबेः पिबेतम् पिबेत। पिबेयम् पिबेव पिबेम २। पिबतु पिबतात् पिबताम् पिबन्तु। पिब पिबतात् पिबतम् पिबत ३। अपिबत् अपिबताम् अपिबन् ४। पिबतिदेति सिज्लोपे अपात् २ अपाताम्।

## सिज्विदोऽभुवः॥ ४२॥

अभुवः सिच्प्रत्ययान्ताद्विदश्च धातोः परस्य झेः पुस् स्यात् । पकार इत् ।

**इडेत्पुसि चातो लुक् ॥ ४३ ॥**

क्ङित्यशिति स्वरे इटि एति पुसि च परे आदन्तस्य धातोरन्तस्य लुक् स्यात् । अपुः । अपाः अपातम् अपात । अपाम् अपाव अपाम ५ ।

**ह्रस्वः ॥ ४४ ॥**

द्वित्वे सति पूर्वस्य ह्रस्वः स्यात् ।

**आतो णव औः ॥ ४५ ॥**

आतः परस्य णव औः स्यात् ।

**इन्ध्यसंयोगात्परोक्षा किद्वत् ॥ ४६ ॥**

इन्धेरसंयोगान्ताच्च परा अवित्परोक्षा किद्वत्स्यादिति कित्त्वादिडेत्पुसीत्यालुक् । पपौ पपतुः पपुः ।

**सृजिदृशिस्कृस्वरात्वतस्तृज्नित्यानिटस्थवः ॥ ४७ ॥**

सृजिदृशिभ्यां स्कृगः स्वरान्तादत्वतश्च तृजिनित्यानिटो विहितस्य थव आदिरिड्वा स्यात् । पपाथ पपिथ पपथुः पप । पपौ पपिव पपिम ६ ।

**गापास्थासादामाहाकः ॥ ४८ ॥**

एषा क्ङित्याशिष्येः स्यात् । पेयात् पेयास्ताम्

पेयासुः । पेयाः पेयास्तम् पेयास्त । पेयासम् पेयास्व पेयास्म ७ ।

## एकस्वरादनुस्वारेतः ॥ ४९ ॥

एकस्वरादनुस्वारेतो धातोस्ताद्यशित इड् न स्यात् । पाता पातारौ पातारः ८। पास्यति पास्यतः पास्यन्ति ९ । अपास्यत् अपास्यताम् अपास्यन् १० इत्यादिवत् । घ्रा गन्धोपादाने । जिघ्रति १ । जिघ्रेत् २ । जिघ्रतु जिघ्रतात् ३ । अजिघ्रत् ४ ।

## ट्धेघ्राशाच्छासो वा ॥ ५० ॥

एभ्यः पञ्चभ्यः परस्य सिचः परस्मैपदे लुब्वा स्यात् । अघ्रात् । पक्षे सः ।

## सिजस्तेर्दिस्योः ॥ ५१ ॥

सिजन्ताद्धातोरस्तेश्च परयोर्दिस्योरादिरीत् स्यात् ।

## यमिनमिरम्यातः सोऽन्तश्च ॥ ५२ ॥

यम्यादिभ्यस्त्रिभ्य आदन्तेभ्यश्च परस्मैपदे सिच आदिरिट् स्यादेषां च स् अन्तः ।

## इट ईति ॥ ५३ ॥

इटः परस्य सिच ईति परे लुक् स्यात् । अघ्रासीत् अघ्राताम् अघ्रासिष्टाम् अघ्रुः-अघ्रासिषुः । अघ्राः अघ्रासीः अघ्रातम्-अघ्रासिष्टम् अघ्रात-

अघ्रासिष्ट । अघ्राम्-अघ्रासिषम् अघ्राव-अघ्रासिष्व अघ्राम-अघ्रासिष्म ५ । परोक्षाया घ्रा घ्रा इति ।

## द्वित्वे व्यञ्जनस्यानादेर्लुक् ॥ ५४ ॥

द्वित्वे पूर्वस्यानादेर्व्यञ्जनस्य लुक् स्यात् । द्वितीयतुर्ययोः पूर्वौ इति घस्य गत्वे ।

## गहोर्जः ॥ ५५ ॥

द्वित्वे सति पूर्वयोर्गहोर्जः स्यात् । जघ्रौ जघ्रतुः जघ्रुः ६ ।

## संयोगादेर्वाशिष्येः ॥ ५६ ॥

संयोगादेरादन्तस्य क्रियाशिष्येर्वा स्यात् । घ्रेयात् घ्रायात् घ्रेयास्ताम् घ्रायास्ताम् घ्रेयासुः-घ्रायासुः ७ । घ्राता ८ । घ्रास्यति ९ । अघ्रास्यत् १० । ध्मा शब्दाग्निसंयोगयोः । धमति १ । धमेत् २ । धमतु-धमतात् ३ । अधमत् ४ । अध्मासीत् ५ । दध्मौ ६ । ध्मेयात् ध्मायात् ७ । ध्माता ८ । ध्मास्यति ९ । अध्मास्यत् १० । ष्ठा गतिनिवृत्तौ ।

## पः सो ष्ट्यैष्ठिवष्वष्कः ॥ ५७ ॥

पाठे धात्वादेः पः सः स्यान्न तु ष्ट्यैष्ठिवष्वष्काम् । निमित्ताभावे नैमित्तिकस्याप्यभाव इति ठस्य थत्वे स्था । तिष्ठति १ । तिष्ठेत् २ । तिष्ठतु तिष्ठतात् ३ । अतिष्ठत् ४ । अस्थात् अस्थाताम् अस्थुः ५ ।

## स्थासेनिसिधुसिचुसञ्जां द्वित्वेऽपि ॥ ५८ ॥

उपसर्गस्थान्नाम्यादेः परेषां स्थादीनां सः षः स्यात् द्वित्वेऽपि। अध्यष्ठात् अध्यष्ठाताम् अध्यष्ठुः।

## अघोषे शिटः ॥ ५९ ॥

द्वित्वे पूर्वस्य शिटस्तत्संबन्धिन्येवाघोषे लुक् स्यात्। तस्थौ अधितष्ठौ तस्थतुः तस्थुः ६। स्थेयात् स्थेयास्ताम् स्थेयासुः। ७ स्थाता अधिष्ठाता ८। स्थास्यति अधिष्ठास्यति ९। अस्थास्यत् अध्यष्ठास्यत् १०। म्नां अभ्यासे। मनति १। मनेत् २। मनतु मनतात् ३। अमनत् ४। अम्नासीत् ५। मम्नौ ६। म्नेयात्-म्नायात् ७। म्नाता ८। म्नास्यति ९। अम्नास्यत् १०। दाम् दाने। यच्छति १। यच्छेत् २। यच्छतु ३। अयच्छत् ४।

## अवौ दाधौ दा ॥ ६० ॥

अवितौ दाधारूपौ धातू दासंज्ञौ स्यातामिति दासंज्ञत्वात्पिबैतीत्यादिना सिलुप्। अदात्। विद्धर्जनात् दांव् देंव् इत्यादेर्न दासंज्ञा। ददौ ६। गापास्थासादामेरेत्वे, देयात् ७। दाता ८। दास्यति ९। अदास्यत् १०। जिं ज्रिं अभिभवे। जयति १। जयेत् २। जयतु जयतात् ३। अजयत् ४।

## सिचि परस्मै समानस्याङिति ॥ ६१ ॥

समानान्तस्य धातोः परस्मैपदविषये सिचि अडिति वृद्धिः स्यात् । अजैषीत् अजैष्टाम् अजैषुः । अजैषीः अजैष्टम् अजैष्ट । अजैषम् अजैष्व अजैष्म ५ ।

## जेर्गिः सन्परोक्षयोः ॥ ६२ ॥

सन्परोक्षयोः परयोर्द्वित्वे सति पूर्वात्परस्य जेर्गिः स्यात् । नामिनोऽकलिहलेरिति वृद्धिः । जिगाय । योऽनेकस्वरस्य । जिग्यतुः जिग्युः । जिगयिथ जिगेथ जिग्यथुः जिग्य ।

## णिद्वान्त्यो णव् ॥ ६३ ॥

परोक्षाया अन्त्यो णव् णिद्वा स्यात् । जिगाय-जिगय जिग्यिव जिग्यिम ६ । दीर्घश्चीति दीर्घे जीयात् जीयास्ताम् जीयासुः ७ । जेता ८ । जेष्यति ९ । अजेष्यत् १० । स्मृ चिन्तायाम् । स्मरति १ । स्मरेत् २ । स्मरतु-स्मरतात् ३ । अस्मरत् ४ । अस्मार्षीत् अस्मार्ष्टाम् अस्मार्षुः । अस्मार्षीः अस्मार्ष्टम् अस्मार्ष्ट । अस्मार्षम् अस्मार्ष्व अस्मार्ष्म ५ । स्मृ स्मृ इति द्वित्वे ।

## ऋतोऽत् ॥ ६४ ॥

द्वित्वे सति पूर्वस्य ऋतोऽत् स्यात् । सस्मार ।

## संयोगादृदर्तेः ॥ ६५ ॥

संयोगात्परो य ऋत्तदन्तस्यार्तेश्चाकि परोक्षायां गुणः स्यात् । सस्मरतुः सस्मरुः ।

ऋतः ॥ ६६ ॥

ऋदन्तात्सृजि नित्यानिटो विहितस्य थव आदिरिड् न स्यात् । सस्मर्थ सस्मरथुः सस्मर । सस्मार-सस्मर, सस्मरिव सस्मरिम ६ ।

क्ययङाशीर्ये ॥ ६७ ॥

संयोगात्परो य ऋत्तदन्तस्यार्तेश्च क्ये यङ्याशीर्ये च गुणः स्यात् । स्मर्यात् स्मर्यास्ताम् स्मर्यासुः ७ । स्मर्ता ८ ।

हनृतः स्यस्य ॥ ६८ ॥

हन्तेर्ऋदन्ताच्च परस्य स्यस्यादिरिट् स्यात् । स्मरिष्यति ९ । अस्मरिष्यत् १० । तृ प्लवनतरणयोः । तरति ४ । अतारीत् अतारिष्टाम् अतारिषुः ५ । ततार ।

स्कृच्छृतोऽकि परोक्षायाम् ॥ ६९ ॥

स्कृऋच्छोर्ऋदन्तानां च परोक्षायां गुणः स्यान्न तु कोपलक्षितायां तस्याम् । तर् इति जाते ।

तृत्रपफलभजाम् ॥ ७० ॥

एषां चतुर्णामवित्परोक्षासेट्थवोः परयोः स्वरस्य एः स्यान्न च द्विः । तेरतुः तेरुः । तेरिथ ६ ।

## ॠतां क्ङितीर् ॥ ७१ ॥

स्पष्टम् ।

## भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने ॥ ७२ ॥

भ्वादेर्धातोर्यौ रवौ तयोः परयोस्तस्यैव नामिनो दीर्घः स्यात् व्यञ्जने परे । तीर्यात् ७ ।

## वॄतो नवाऽनाशीः सिच्परस्मै च ॥ ७३ ॥

वृभ्यामॄदन्तेभ्यश्च परस्येटो दीर्घो वा स्यात् नतु परोक्षाशिषोः सिचि परस्मैपदे च । तरिता-तरीता ८ । तरिष्यति-तरीष्यति ९ । अतरिष्यत्-अतरीष्यत् १० । ट्धें पाने । धयति ४ ।

## आत्सन्ध्यक्षरस्य ॥ ७४ ॥

धातोः सन्ध्यक्षरान्तस्य आः स्यात् नतु शिति परे । ततश्च दासंज्ञा ।

## ट्धेश्वेर्वा ॥ ७५ ॥

आभ्यां कर्तर्यचतन्यां डो वा स्यात् । द्विर्धातुरिति द्वित्वे पूर्वह्रस्वत्वे दत्वे च । अदधत् अदधताम् अदधन् । ट्धेघ्राशाच्छासो वेति सिज्लोपविकल्पे । अधात् अधाताम् अधुः । पक्षे अधासीत् अधासिष्टाम् अधासिषुः ५ । दधौ ६ । धेयात् ७ । धाता ८ । धास्यति ९ । अधास्यत् १० । ध्यैं चिन्तायाम् । ध्यायति ४ । अध्यासीत् ५ । दध्यौ

दध्यतुः दध्युः । दध्यिथ ६ । ध्येयात्-ध्यायात् ७। अर्च पूजायाम् । अर्चति ।

## स्वरादेस्तासु ॥ ७६ ॥

स्वरादेर्धातोरादेरद्यतनीह्यस्तनीक्रियातिपत्तिषु वृद्धिः स्यात् । आर्चत् ४ । आर्चीत् आर्चिष्टाम् ५।

## अनातो नश्चान्त ऋदाद्यशौ संयोगस्य ॥ ७७ ॥

ऋदादेरश्नोतेः संयोगान्तस्य च परोक्षायां द्वित्वे पूर्वस्यादेरत आत्स्थानादन्यस्य आः स्यात् कृतातो नोन्तश्च । आनर्च आनर्चतुः आनर्चुः ६ । अर्च्यात् ७ । अर्चिता ८ । अर्चिष्यति ९ । आर्चिष्यत् १० । त्यजं हानौ । त्यजति ४ ।

## व्यञ्जनानामनिटि ॥ ७८ ॥

व्यञ्जनान्तस्य धातोः परस्मैपदविषयेऽनिटि सिचि समानस्य वृद्धिः स्यात् । चजः कगमिति जस्य गत्वे, अघोषे प्रथमो शिट इति गस्य कत्वे, नाम्यन्तस्थेति सस्य षत्वे, अत्याक्षीत् ।

## धुड् ह्स्वाल्लुगनिटस्तथोः ॥ ७९ ॥

धुडन्तात् ह्स्वान्ताच्च धातोः परस्यानिटः सिचस्तादौ थादौ च लुक् स्यात् । अत्याक्ताम् अत्याक्षुः । अत्याक्षीः । अत्याक्ष्म ५ ।

## ञ्णिति ॥ ८० ॥

ञिति णिति च परे धातोरुपान्त्यस्यातो वृद्धिः स्यात् । तत्याज तत्यजतुः । तत्यजिथ तत्यक्थ ६ । त्यज्यात् ७ । त्यक्ता ८ । त्यक्ष्यति ९ । अत्यक्ष्यत् १० । व्रज गतौ । व्रजति ४ ।

## वद्व्रजलः ॥ ८१ ॥

वदव्रजोर्लन्तरन्तयोश्चोपान्त्यस्य परस्मैपदे सेटि सिचि वृद्धिः स्यात् । अव्राजीत् अव्राजिष्टाम् अव्राजिषुः । अव्राजीः ५ । वव्राज ६ । व्रज्यात् ७ । व्रजिता ८ । व्रजिष्यति ९ । अव्रजिष्यत् १० । पत्लृ पथे गतौ । पतति ४ ।

## नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यातिहन्तिदेग्धौ ॥ ८२ ॥

अदुरुपसर्गान्तस्थाद्रादेः परस्यैषां सप्तदशानां संबन्धिनो नेरुपसर्गस्य नोण् स्यात् । प्रणिपतति ।

## लृदिद्द्युतादिपुष्यादेः परस्मै ॥ ८३ ॥

लृदितो द्युतादेः पुष्यादेश्च परस्मैपदेऽद्यतन्यामङ् स्यात् ।

## श्वयत्यसूवचपतः श्वास्थवोचपप्तम् ॥ ८४ ॥

एषां चतुर्णामङि परे यथासङ्ख्यं श्वादयः स्युः। इति पप्तादेशे। अपप्तत् अपप्तताम् अपप्तन् ५। पपात ६।

## अनादेशादेरेकव्यञ्जनमध्येऽतः॥ ८५॥

अवित्परोक्षासेट्थवोः परयोर्योऽनादेशादिर्धातुस्तत्संबन्धिनोऽकारस्यासंयुक्तव्यञ्जनमध्यगतस्य एः स्यान्न तु द्विः। प्राक् स्वरे स्वरविधेरिति कृतमपि द्वित्वं निवर्तते इत्यर्थः। पेततुः पेतुः। पेतिथ ६। पत्यात् ७। पतिता ८। गद व्यक्तायां वाचि। गदति प्रणिगदति ४।

## व्यञ्जनादेर्वोपान्त्यस्यातः॥ ८६॥

व्यञ्जनादेर्धातोरुपान्त्यस्यातः सेटि सिचि परस्मैपदे वृद्धिर्वा स्यात्। अगादीत्-अगदीत् अगादिष्टाम्-अगदिष्टाम् अगादिषुः-अगदिषुः ५। जगाद ६। गद्यात् ७। गदिता ८। गदिष्यति ९। अगदिष्यत् १०। अर्द गतियाचनयोः। अर्दति ४। आर्दीत् ५। आनर्द ६। अर्द्यात् ७। अर्दिता ८। अर्दिष्यति ९। आर्दिष्यत् १०। णिदु कुत्सायाम्। पाठे धात्वादेर्णो नः।

## उदितः स्वरान्नोऽन्तः॥ ८७॥

उदितो धातोः स्वरात्परो नोऽन्तः स्यात्। म्नां धुड्वर्गेऽन्त्योऽपदान्ते। निन्दति ४। इट ईतीति

सिज्लोपे । अनिन्दीत् अनिन्दिष्टाम् अनिन्दिषुः । अनिन्दिष्म ५ । निनिन्द ६ । निन्द्यात् ७ । निन्दिता ८ । एवं टुनदु समृद्धौ ९ । नन्दतीत्यादि १० । णमं प्रह्वत्वे । नमति ४ ।

## अदुरुपसर्गान्तरोणहिनुमीनानेः ॥ ८८ ॥

दुर्वर्जोपसर्गस्थादन्तःशब्दस्थाच्च रादेः परस्यैषां नो णः स्यात् । णेति णोपदेशा धातवः । प्रणमति । यमिरमीति सागमे । शिड् हेऽनुस्वार इत्यनुस्वारे । अनंसीत् अनंसिष्टाम् अनंसिषुः ५ । ननाम नेमतुः नेमुः । नेमिथ-ननन्थ ६ । नम्यात् ७ । नन्ता ८ । नंस्यति ९ । अनंस्यत् १० । गम्लृं गतौ ।

## गमिषद्यमः च्छः ॥ ८९ ॥

एषां शिति च्छः स्यात् । गच्छति ४ । लृदित्त्वादङागमे । अगमत् अगमताम् अगमन् ५ । जगाम ।

## गमहनजनखनघसः स्वरेऽनङि क्ङिति लुक् ॥ ९० ॥

एषामुपान्त्यस्याङ्वर्जे स्वरादौ क्ङिति परे लुक् स्यात् । जग्मतुः जग्मुः ६ । गम्यात् ७ । गन्ता ८ ।

## गमोऽनात्मने ॥ ९१ ॥

गमः परस्य स्यादेरिट् स्यात् नत्वात्मनेपदे । गमिष्यति गमिष्यतः गमिष्यन्ति ९ । अगमिष्यत्

अगमिष्यताम् अगमिष्यन् । अगमिष्यः अगमिष्यतम् अगमिष्यत । अगमिष्यम् अगमिष्याव अगमिष्याम १० । क्रमू पादविक्षेपे ।

भ्रासभ्लासभ्रमक्रमक्लमत्रसित्रुटिलषियसिसंयसेर्वा ॥ ९२ ॥

एभ्यो दशभ्यः कर्तृविहिते शिति श्यो वा स्यात् ।

क्रमो दीर्घः परस्मै ॥ ९३ ॥

क्रमः परस्मैपदे शिति दीर्घः स्यात् । क्राम्यति-क्रामति । क्राम्येत् क्रामेत् ४ ।

क्रमः ॥ ९४ ॥

क्रमः परस्य स्ताद्यशित इट् स्यान्नत्वात्मनेपदे ।

न श्विजागृशसक्षणह्म्येदितः ॥ ९५ ॥

एषां ह्यन्तानामेदितां च परस्मैपदे सेटि सिचि वृद्धिर्न स्यात् । अक्रमीत् अक्रमिष्टाम् ५ ।

कङश्चञ् ॥ ९६ ॥

द्वित्वे पूर्वयोः कङोश्चञौ स्याताम् । चक्राम चक्रमिथ चक्रन्थ ६ । क्रम्यात् ७ । क्रमिता ८ । क्रमिष्यति ९ । अक्रमिष्यत् १० । दृशूं प्रेक्षणे । पश्यति ४ ।

ऋदिच्छ्विस्तम्भूस्तुम्भूम्रुचूम्लुचूग्रुचूग्लुचूग्लुञ्चूश्वूजो वा ॥ ९७ ॥

ऋदितः श्व्यादीनां नवानां च परस्मैपदेऽद्यतन्यामङ् वा स्यात् ।

## ऋवर्णदृशोऽङि ॥ ९८ ॥

ऋवर्णान्तानां दृशश्चाङि परे गुणः स्यात् । अदर्शत् अदर्शताम् अदर्शन् । पक्षे सिचि ।

## अः सृजिदृशोऽकिति ॥ ९९ ॥

अनयोः स्वरात्परो धुडादौ प्रत्ययेऽदन्तः स्यात् नतु किति । द्रश् इति जाते व्यञ्जनानामनिटीति वृद्धौ, यजसृजेति शस्य षत्वे ।

## षढोः कः सि ॥ १०० ॥

से परे षढोः कः स्यात् । नाम्यन्तस्थेति सस्य षत्वे । अद्राक्षीत् अद्राष्टाम् अद्राक्षुः ५ । वित्परोक्षायाः कित्त्वाभावः ।

## लघोरुपान्त्यस्य ॥ १०१ ॥

धातोरुपान्त्यस्य नामिनो लघोरक्ङिति गुणः स्यात् । ददर्श ददृशतुः ददृशुः । सृजिदृशीत्यादिनेड्विकल्पे, दद्रष्ठ ददर्शिथ ६ । दृश्यात् ७ । द्रष्टा ८ । द्रक्ष्यति ९ । अद्रक्ष्यत् १० । दंशं दशने । दंशसंजः शवि लुक् । दशति ४ । अदाङ्क्षीत् ५ । ददंश ६ । संयोगान्तत्वादवित्परोक्षायाः कित्त्वाभावे न् लोपाभावः । ददंशतुः ।

## नो व्यञ्जनस्यानुदितः ॥ १०२ ॥

व्यञ्जनान्तस्यानुदितो धातोरुपान्त्यस्य नः क्ङिति परे लुक् स्यात् । दश्यात् ७ । दंष्टा ८ । दङ्क्ष्यति ९ । अदङ्क्ष्यत् १० । कृपं विलेखने । लघोरुपान्त्यस्येति गुणे, कर्षति ४ ।

## स्पृशमृशकृषतृपदृपो वा ॥ १०३ ॥

एभ्योऽद्यतन्यां सिच् वा स्यात् ।

## स्पृशादिसृपो वा ॥ १०४ ॥

स्पृशादिपञ्चकस्य सृपश्च स्वरात्परो धुडादौ प्रत्ययेऽदन्तो वा स्यात् न तु किति । शेषं दृशिवत् । अक्राक्षीत् अक्राष्टाम् अक्राक्षुः । अकार्क्षीत् अकार्ष्टाम् । अकार्क्षुः । पक्षे ।

## हशिटो नाम्युपान्त्याददृशोऽनिटः सक् ॥ १०५ ॥

हान्ताच्छिडन्ताच्च नाम्युपान्त्याद्दृश्वर्जादनिटोऽद्यतन्यां सक् स्यात् । सिजपवादः । अकृक्षत् अकृक्षताम् अकृक्षन् ५ । चकर्ष चकृषतुः ६ । कृष्यात् ७ । क्रष्टा-कर्ष्टा ८ । क्रक्ष्यति-कर्क्ष्यति ९ । अक्रक्ष्यत् अकर्क्ष्यत् १० । हसे हसने । हसति ४ । एदित्त्वाद्वृद्ध्यभावे । अहसीत् अहसिष्टाम् अससिषुः । ५ जहास ६ । हस्यात् ७ । हसिता ८ ।

हसिष्यति ९ । अहसिष्यत् १० । दहं भस्मीकरणे । दहति ४ । भ्वादेर्दादेर्घः । इति हस्य घत्वे, गडदवादेरिति दस्य धत्वे, अघोषे प्रथमोऽशिट इति घस्य कत्वे, अधाक्षीत् । धुड् ह्रस्वादिति सिज्लुपि ।

## अधश्चतुर्थात्तथोर्धः ॥ १०६ ॥

चतुर्थात्परयोर्धारूपवर्जाद्धातोर्विहितयोस्तथोर्धः स्यात् । अदाग्धाम् अधाक्षुः ५ । ददाह देहतुः देहुः ६ । दह्यात् ७ । दग्धा ८ । धक्ष्यति ९ । अधक्ष्यत् । १० । मिहं सेचने । मेहति ४ । हशिट इति सकि, अमिक्षत् ५ । मिमेह मिमिहतुः ६ । मिह्यात् ७ ।

## ढस्तड्ढे ॥ १०७ ॥

तन्निमित्ते ढे परे ढस्यालु लुक् स्यात् दीर्घश्चादिदुतः । मेढा ८ । मेक्ष्यति ९ । अमेक्ष्यत् १० । अर्हं मह पूजायाम् । अर्हति ४ । आर्हीत् ५ । आनर्ह ६ । अर्ह्यात् ७ । अर्हिता ८ । अर्हिष्यति ९ । आर्हिष्यत् १० । महति ४ । अमहीत् ५ । ममाह मेहतुः ६ । मह्यात् ७ । महिता ८ । महिष्यति ९ । अमहिष्यत् १० । अक्षौ व्याप्तौ च ।

## वाऽक्षः ॥ १०८ ॥

अस्मात्कर्तरि शिति श्नुर्वा स्यात् ।

## उश्नोः ॥ १०९ ॥

धातोः परयोरकिति गुणः स्यात् । अक्ष्णोति ।

## शिदवित् ॥ ११० ॥

धातोः परोऽवित् शिप्रत्ययो ङिद्वत्स्यात् । अक्ष्णुतः । श्नुश्नोरित्युवादेशे । अक्ष्णुवन्ति १ । अक्ष्णुयात् २ । अक्ष्णोतु-अक्ष्णुतात् । अक्ष्णुहि ३ । आक्ष्णोत् ४ । पक्षे अक्षति ४ ।

## धूगौदितः ॥ १११ ॥

धूग औदिद्भ्यश्च परस्य स्ताद्यशित आदिरिड्वा स्यात् । इटि आक्षीत् । पक्षेऽपि आक्षीत् । तक्षौ त्वक्षौ तनूकरणे । ( तक्षः स्वार्थे वा श्नुः शिति* ) तक्ष्णोति तक्ष्णुतः ४ इति । अतक्षीत् । पक्षे व्यञ्जनानामनिटीति वृद्धौ, संयोगस्यादावित्ति कलुकि, षस्य कत्वे, अताक्षीत् अतक्षिष्टाम्-अताष्टाम् अतक्षिषुः-अताक्षुः ५ । ततक्ष ६ । तक्ष्यात् ७ । तक्षिता-तष्टा ८ । तक्षिष्यति-तक्ष्यति ९ । अतक्षिष्यत् १० ।

इति भ्वादय परस्मैपदिन ।

---

अथ भ्वादय आत्मनेपदिनः ।

एधि वृद्धौ । शवि एधते धर्मतः सुखम् ।

## आतामाते आथामाथे आदिः ॥ ११२ ॥

आत्परेषामेषां चतुर्णामात इः स्यात् । एधेते एधन्ते । एधसे एधेथे एधध्वे । एधे एधावहे एधा-

महे १ । एधेत एधेयाताम् एधेरन् । एधेथाः एधेयाथाम् एधेध्वम् । एधेय एधेवहि एधेमहि २ । एधताम् एधेताम् एधन्ताम् । एधस्व एधेथाम् एधध्वम् । एधै एधावहै एधामहै ३ । स्वरादेस्तास्विति वृद्धौ । ऐधत ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ४ । ऐधिष्ट ऐधिषाताम् ।

## अनतोऽन्तोऽदात्मने ॥ ११३ ॥

अनतः परस्यात्मनेपदस्यान्तोऽत्स्यात् । ऐधिषत । ऐधिष्ठाः ऐधिषाथाम् ।

## सो धि वा ॥ ११४ ॥

धातोर्धादौ प्रत्यये सो लुग्वा स्यात् । ऐधिध्वम् । पक्षे । नाम्यन्तस्थेति सिचः षत्वे, तस्य तृतीयस्तृतीय इति डत्वे, तवर्गश्चवर्गेति धस्य ढत्वे, ऐधिड्ढ्वम् । ऐधिषि ऐधिष्वहि ऐधिष्महि ५ ।

## गुरुनाम्यादेरनृच्छूर्णोः ॥ ११५ ॥

गुरुर्नाम्यादिर्यस्य तस्माद्धातो ऋच्छूर्णुवर्जात्परस्या' परोक्षाया आम् स्यात् आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते । अनुर्विपर्यासव्यवहितनिवृत्त्यर्थः । एधांचभूव एधांचभूवतुः एधांबभूवुः, इत्यादि प्राग्वत् ।

## आमः कृगः ॥ ११६ ॥

आमः परादनुप्रयुक्तात्कृग आम एव प्राग् यो धातुस्तस्मादिव कर्तर्यात्मनेपदं स्यात्स चेदात्मनेपदार्हस्तस्मात्तत्प्रयोज्यमन्यथा परस्मैपदमिति । एधांचक्रे । एधामास ६ । एधिषीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि ७ । एधिता एधितारौ एधितारः । एधितासे एधितासाथे एधिताध्वे । एधिताहे एधितास्वहे एधितास्महे ८ । एधिष्यते एधिष्येते एधिष्यन्ते । एधिष्यसे एधिष्येथे एधिष्यध्वे । एधिष्ये एधिष्यावहे एधिष्यामहे ९ । ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि १० । द्युति दीप्तौ । लघोरुपान्त्यस्येति गुणे द्योतते १ । द्योतेत २ । द्योतताम् ३ । अद्योतत ४ ।

## द्युद्भ्योऽद्यतन्याम् ॥ ११७ ॥

द्युतादिभ्योऽद्यतनीविषये कर्तर्यात्मनेपदं वा स्यात् । अद्योतिष्ट । पक्षे लृदिद्द्युतादिपुष्यादेः परस्मै इत्यङ् । अद्युतत् अद्योतिषाताम्-अद्युतताम् अद्योतिषत-अद्युतन् । अद्योतिष्ठाः-अद्युतः अद्योतिषाथाम्-अद्युततम् अद्योतिध्वम्-अद्युतत । अद्यो-

तिषम्-अद्युतम् अद्योतिष्व-अद्युताव अद्योतिष्म-अद्युताम ५ ।

## द्युतेरिः ॥ ११८ ॥

द्युतेर्द्वित्वे पूर्वस्य उत इः स्यात् । दिद्युते दिद्युताते दिद्युतिरे । दिद्युतिषे इत्यादि ६ । द्योतिषीष्ट ७ । द्योतिता ८ । द्योतिष्यते ९ । अद्योतिष्यत १० । रुचि अभिप्रीत्यां च । रोचते इत्यादि । एवं द्युतादयस्त्रयोविंशतिस्तत्र वृदादिपञ्चतो विशेषः । वृतूङ् वर्तने । वर्तते ४ । अवर्तिष्ट अवृतत् ५ । ववृते ६ । वर्तिषीष्ट ७ । वर्तिता ८ ।

## वृद्भ्यः स्यसनोः ॥ ११९ ॥

वृतादेः पञ्चतः स्यादौ प्रत्यये सनि च विषये कर्तर्यात्मनेपदं वा स्यात् । वर्तिष्यते । पक्षे ।

## न वृद्भ्यः ॥ १२० ॥

वृतादिपञ्चकात् स्याद्यशितोऽनात्मने इट् न स्यात् । वर्त्स्यति ९ । अवर्तिष्यत-अवर्त्स्यत् १० । स्यन्दौङ् स्रवणे । स्यन्दते । औदित्त्वादिड्वा । अस्यन्दिष्ट-अस्यन्त अस्यन्दिषाताम्-अस्यन्त्साताम् अस्यन्दिषत-अस्यन्त्सत ५ । द्युद्भ्योऽद्यतन्यामिति परस्मैपदपक्षे अङि सति नो व्यञ्जनस्येति नलुकि । अस्यदत् अस्यदताम् अस्यदन् ५ । सस्यन्दे सस्यन्दिषे सस्यन्त्से ६ । स्यन्दिषीष्ट-स्यन्त्सीष्ट ७ ।

स्यन्दिता-स्यन्ता स्यन्दितासे-स्यन्तासे ८। स्यन्दिष्यते-स्यन्त्स्यते स्यन्त्स्यति ९। अस्यन्दिष्यत-अस्यन्त्स्यत अस्यन्त्स्यत् १०।

## निरभ्यनोश्च स्यन्दस्याप्राणिनि ॥ १२१ ॥

एभ्यः परिनिविभ्यश्च परस्याप्राणिकर्तृकस्य स्यन्दः सः षा स्यात् । अनुष्यन्दते अनुस्यन्दते जलम्। अप्राणिनीति किम्। अनुस्यन्दते हस्ती। वृधूङ् वृद्धौ। शृधूङ् शब्दकुत्सायाम्। एतौ वृतिवत्। कृपौङ् सामर्थ्ये।

## ऋरलृलं कृपोऽकृपीटादिषु ॥ १२२ ॥

कृपेर्ऋतो रस्य च लृल् स्यात् नतु कृपीटादिविषयस्य। कल्पते ४। द्युद्भ्योऽद्यतन्यामित्यात्मनेपदविकल्पे धूगौदित इतीड्विकल्पे च अकल्पिष्ट। पक्षे

## सिजाशिषावात्मने ॥ १२३ ॥

नामिन्युपान्त्ये सति धातोनिरटावात्मनेपदविषयौ सिजाशिषौ किद्वत्स्याताम्। अक्लृप्त। पक्षे अक्लृपत् ५। चक्लृपे। चक्लृपिषे-चक्लृप्से इत्यादि ६। कल्पिषीष्ट-क्लृप्सीष्ट ७।

## कृपः श्वस्तन्याम् ॥ १२४ ॥

कृपेः श्वस्तन्यामात्मनेपदं वा स्यात्। कल्पिता

कल्प्ता । परस्मैपदपक्षे न वृद्भ्य इतीड्निषेधे कल्प्ता । एवं कल्पितासे-कल्प्तासि ८ । कल्पिष्यते-कल्प्स्यते-कल्प्स्यति ९ । अकल्पिष्यत-अकल्प्स्यत-अकल्प्स्यत् १० । कपुङ् चलने । उदित इति नुमागमे म्नां धुड्वर्गेंति मत्वे कम्पते ४ । अकम्पिष्ट ५ । चकम्पे ६ । क्षमौंषि सहने । क्षमते ४ । औदित्त्वात् अक्षमिष्ट-अक्षंस्त क्षमिता-क्षन्ता । रमिं क्रीडायाम् । रमते ४ । अरंस्त ५ । रेमे ६ । रंसीष्ट ७ । रन्ता ८ । रंस्यते ९ । अरंस्यत १० । ( व्याङ्परे रमः परस्मैपदं स्यात्* ) विरमति । व्यरंसीत् । विरराम । डुलभिंषू प्राप्तौ । लभते ४ । अधश्चतुर्थात्तथोर्धः । अलब्ध ५ । लेभे ६ । लप्सीष्ट ७ । लब्धा ८ । लप्स्यते ९ । अलप्स्यत १० । स्फायैङ् ओप्यायैङ् वृद्धौ । स्फायते ४ । अस्फायिष्ट ।

## हान्तस्थाञ्जीड्भ्यां वा ॥ १२५ ॥

हादन्तस्थायाश्च पराञ्जेरिटश्च परासां परोक्षाद्यतन्याशिषां धो ढ् वा स्यात् । अस्फायिढ्वम्-अस्फायिध्वम् । पस्फाये पस्फायिढ्वे २ । ६ । स्फायिषीष्ट स्फायिषीढ्वम् २ । ७ । स्फायिता ८ । स्फायिष्यते ९ आप्यायते ४ ।

## दीपजनबुधिपूरितायिप्यायो वा ॥ १२६ ॥

एभ्यः षड्भ्योऽद्यतन्यास्ते परे ञिच् वा स्या-

त्तद्योगे तलुक् च । अचावितौ । आप्यायि चैत्रः । आप्यायिष्ट ५ ।

## प्यायः पीः ॥ १२७ ॥

प्यायः परोक्षायङोः पीः स्यात् । आपिप्ये । आपिप्यिपे ६ । आप्यायिषीष्ट ७ । आप्यायिता ८ । आप्यायिष्यते ९ । आप्यायिष्यत १० । तायृङ् संतानपालनयोः । तायते ४ । अतायि अतायिष्ट इत्यादि । अयिवयिप्रभृतयो गतौ । अयते । उपसर्गस्यायौ रो लः । प्लायते पलायते ४ । पलायिष्ट ५ ।

## दयायास्कासः ॥ १२८ ॥

एतश्चतुर्भ्यः परोक्षाया आम् स्यात् । पलायांचक्रे ६ । दयि दानगतिहिंसादानेषु च । दयते ४ । अदयिष्ट ५ । दयाचक्रे ६ । षेवृङ् सेवृङ् सेवने ।

## परिनिवेः सेवः ॥ १२९ ॥

एभ्यः परस्य सेवः सो द्वित्वेप्यट्यपि षः स्यात् । सेवते परिषेवते । पर्यषेवत ४ । पर्यषेविष्ट ५ । परिषिषेवे ६ । परिषेविषीष्ट ७ । परिषेविता ८ । परिषेविष्यते ९ । पर्यषेविष्यत १० । षहि मर्षणे । सहते ।

## असोङसिवूसहस्सटाम् ॥ १३० ॥

परिनिविभ्यः परस्य सिवूसहोः स्सटश्च सः ष्

स्यात् अटि च वा नच सोढविषये । विषहते । पर्यषहत-पर्यसहत ४ । पर्यषहिष्ट २ । ५ । सेहे ६ । सहिषीष्ट ७ ।

## सहलुभेच्छरुषरिषस्तादेः ॥ १३१ ॥

एभ्यः परस्य तादेरशित आदिरिड् वा स्यात् । सहिता । पक्षे होधुड्पदान्ते इति हस्य ढत्वे, अधश्चतुर्थादिति तस्य धत्वे, तवर्गश्चवर्गेति धस्य ढत्वे ।

## सहिवहेरोच्चावर्णस्य ॥ १३२ ॥

सहिवह्योर्ढस्य तड्ढे परे लुक् स्यात् ओच्चावर्णस्य । सोढा-सहिता सोढारौ । असोडेति किम् । विषहितासे-विसोढासे ८ । सहिष्यते ९ । असहिष्यत १० । गाहौङ् विलोडने । गाहते ४ । इड्विकल्पे अगाहिष्ट-अगाढ अगाहिषाताम्-अघाक्षाताम् अगाहिषत-अघाक्षत । अगाहिष्ठाः-अगाढाः इत्यादि ५ । जगाहे जगाहिषे-जघाक्षे ६ । गाहिषीष्ट-घाक्षीष्ट ७ । गाहिता-गाढा ८ । गाहिष्यते-घाक्ष्यते ९ । अगाहिष्यत-अघाक्ष्यत १० । ईहि चेष्टायाम् । ईहते ऐहत ४ । ऐहिष्ट ५ । ईहांचक्रे ६ । ईहिषीष्ट ७ । ईहिता ८ । ईहिष्यते ९ । ऐहिष्यत १० । ईक्षि दर्शने । ईक्षते ऐक्षत ४ । ऐक्षिष्ट ५ । ईक्षांचक्रे ६ । ईक्षिषीष्ट ७ । ईक्षिता ८ । ईक्षिष्यते ९ । ऐक्षिष्यत १० ।

विशिष्टार्थोपसर्गादेः परस्मैपदिनामपि ।
तथा चोभयपदिनामात्मनेपदिता भवेत् ॥ १ ॥

## देवार्चामैत्रीसङ्गमपथिकर्तृकमन्त्रकरणे स्थः ॥ १३३ ॥

एतदर्थादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात् । देवार्चा जिनेन्द्रमुपतिष्ठते उपातिष्ठत ४ ।

## इश्च स्थादः ॥ १३४ ॥

स्थाधातोर्दासंज्ञाच्चात्मनेपदविषयः सिच् किद्वत्स्यात् तद्योगे च स्थादोरिश्च । सिचः कित्त्वाद्गुणाभावः । धुड्ह्रस्वादिति सिज्लोपे उपास्थित उपास्थिषाताम् उपास्थिषत ५ । उपतस्थे ६ । उपस्थासीष्ट ७ । उपस्थाता ८ । उपस्थास्यते ९ । उपास्थास्यत १० । मैत्री रथिकानुपतिष्ठते । संगमः यमुना गङ्गामुपतिष्ठते । पन्थाः कर्ता यस्य तत्र स्रुघ्नमुपतिष्ठते पन्थाः । मन्त्रः करणं यस्य तत्र ऐन्द्र्या गार्हपत्यमुपतिष्ठते ।

## वा लिप्सायाम् ॥ १३५ ॥

उपात्स्थो लिप्सायां गम्यायामात्मनेपदं वा स्यात् । भिक्षुर्वदान्यमुपतिष्ठते ।

## उदोऽनूर्ध्वेहे ॥ १३६ ॥

अनूर्ध्वचेष्टायां उत्पूर्वात्स्थस्तथा । मुक्तावुत्ति-

ष्ठते । ऊर्ध्वचेष्टायां तु आसनादुत्तिष्ठति । अचेष्टायामपि ग्रामाच्छतमुत्तिष्ठति ।

## उदः स्थास्तम्भः सः ॥ १३७ ॥

उदः परयोः स्थास्तम्भोः सस्य लुक् स्यात् । उत्थाता ।

## ज्ञीप्सा स्थेये ॥ १३८ ॥

ज्ञीप्सात्मप्रकाशनं स्थेयः सभ्यस्तयोर्विषये स्थ आत्मनेपदम् । तिष्ठते कन्या छात्रेभ्यः । त्वयि तिष्ठते विवादः । प्रतिज्ञायामप्येवम् । नित्यं शब्दमातिष्ठते । ( संविप्रावात्* ) संतिष्ठते इत्यादि ।

## उपात्स्थः ॥ १३९ ॥

कर्मण्यसति तथा । योगे उपतिष्ठते । सकर्मणस्तु नृपमुपतिष्ठति ।

## प्रोपादारम्भे ॥ १४० ॥

आभ्यामारम्भेऽर्थे क्रम आत्मनेपदं स्यात् । प्रक्रमते ४ । क्रम इतीड्निषेधे प्राक्रंस्त ५ । प्रचक्रमे ६ । प्रक्रंसीष्ट ७ । प्रक्रन्ता ८ । प्रक्रंस्यते ९ । प्राक्रंस्यत १० । ( क्रमोऽनुपसर्गाद्वात्मनेपदम्* ) क्रमते-क्रामति इत्यादि । ( आङो ज्योतिरुद्गमे* ) आक्रमते भानुः । वद व्यक्तायां वाचि ।

## व्यक्तवाचां सहोक्तौ ॥ १४१ ॥

व्यक्तवाचो नरादयस्तेषां संभूयोच्चारणार्थाद्वद

आत्मनेपदं स्यात् । संप्रवदन्ते ग्राम्याः । ( विवादे वा* ) विवदन्ति विवदन्ते वा गणकाः । ( अनोः कर्मण्यसति* ) अनुवदते चैत्रो मैत्रस्य । कर्मणि तु उक्तमनुवदति ।

## समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः ॥ १४२ ॥

संपूर्वेभ्य एभ्योऽष्टाभ्यः कर्मण्यसत्यात्मनेपदं स्यात् । सङ्गच्छते समगच्छत ।

## गमो वा ॥ १४३ ॥

गमेरात्मनेपदविषयौ सिजाशिषौ किद्वद्वा स्याताम् ।

## यमिरमिनमिगमिहनिमनिवनतितनादेर्धुटि क्ङिति ॥ १४४ ॥

एषां तनादीनां च धुडादौ क्ङिति लुक् स्यात् इति मलुकि धुड्ह्रस्वादिति सिज्लुपि समगत । पक्षे समगंस्त समगसाताम्-समगंसाताम् ५ । संजग्मे संजग्मिषे ६ । संगसीष्ट संगंसीष्ट ७ । संगन्ता ८ । संगंस्यते ९ । समगंस्यत १० । औस्वृ शब्दोपतापयोः । संस्वरते ४ । समस्वरिष्ट ५ । संयोगादृदर्तेरिति गुणे संसस्वरे संसस्वरिषे ६ । इत्यादि । संपश्यते ४ । सिजाशिषावात्मन इति सिचः कि-

त्वम् । समदृष्ट समदृक्षाताम् समदृक्षत ५ । संददृशे संददृशिषे ६ । संदृक्षीष्ट ७ । सद्रष्टा ८ । संद्रक्ष्यते ९ । समद्रक्ष्यत १० । सकर्मकत्वे तु संगच्छति रविं शशीत्यादि । ( गमेः क्षान्तौ आत्मनेपदम्* ) आगमयते गुरुम् । कंचित्कालं प्रतीक्षत इत्यर्थः । चर गतिभक्षणयोः ।

## उदश्चरः साप्यात् ॥ १४५ ॥

उत्पूर्वाच्चरेः सकर्मकादात्मनेपदं स्यात् । मार्गमुच्चरते । उत्क्रम्य यातीत्यर्थः । अकर्मकत्वे तु धूम उच्चरति । ऊर्ध्वं गच्छतीत्यर्थः ।

## समस्तृतीयया ॥ १४६ ॥

संपूर्वाच्चरेस्तृतीयान्तेन योगे आत्मनेपदं स्यात् । अश्वेन संचरते ४ । समचरिष्ट ५ । संचेरे संचेरिषे ६ । इत्यादि । अन्यत्र तु संचरति समचारीत् । संचचारेत्यादि । ( नुप्रच्छः * ) आनुते शृगालः । आपृच्छते गुरुम् । क्रीडृ विहारे ।

## क्रीडोऽकूजने ॥ १४७ ॥

कूजनमव्यक्तशब्दस्ततोऽन्यार्थात्संपूर्वात्क्रीडतेरात्मनेपदं स्यात् । संक्रीडते । कूजने तु संक्रीडन्त्यनांसि ।

## अन्वाङ्परेः ॥ १४८ ॥

एभ्यस्त्रिभ्यः क्रीडतेरात्मनेपदं स्यात् । अनुक्रीडते

त। अन्वक्रीडिष्ट ५। अनुचिक्रीडे अनुचिक्रीडिषे ६। इत्यादि। अन्यत्र तु क्रीडति। अक्रीडीत् चिक्रीडेत्यादि। तपं धूप संतापे।

## व्युदस्तपः ॥ १४९ ॥

आभ्यां परात्तपेः कर्मण्यसति स्वेऽङ्गे वा कर्मणि सत्यात्मनेपदं स्यात्। वितपते उत्तपते रविः। वितपते पाणिम्। व्यतपत ४। व्यतप्त व्यतप्साताम् व्यतप्सत ५। वितेपे वितेपिषे ६। वितप्सीष्ट ७। वितप्ता ८। वितप्स्यते ९। व्यतप्स्यत १०। अन्यत्र तु तपति तपः। अताप्सीत् अताप्ताम् अताप्सुः ५। तताप तेपिथ-ततप्थेत्यादि १०।

## आङो यमहनः स्वेऽङ्गे च ॥ १५० ॥

आङ्पराभ्यां यम्हन्भ्यां कर्माभावे स्वेऽङ्गे वा कर्मण्यात्मनेपदं स्यात्। आयच्छते ४।

## यमः सूचने ॥ १५१ ॥

सूचनार्थाद्यमेरात्मनेपदविषयः सिच् किद्वत्स्यात्। कित्त्वाद्यमिरमीत्यादिनाम् लुकि, उपायत। (वा स्वीकृतौ सिचः कित्त्वम्*) उपायत-उपायंस्त शस्त्रम्। उपायसाताम् इत्यादि ५। उपायेमे ६। उपायंसीष्ट ७। उपायन्ता ८। उपायंस्यते ९। उपायंस्यत १०। आहते इत्यादिवत्।

## क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसो ह्वहश्चानन्योऽन्यार्थे ॥ १५२ ॥

अन्यचिकीर्षितायाः क्रियाया अन्येन हरणं करणं क्रियाव्यतिहारः तदर्थाद्गतिहिंसाशब्दार्थहस्वर्जाद्धातोर्हृवहिभ्यां चात्मनेपदं स्यात्। व्यतिहरन्ते व्यतिवहन्ते भारम् । गत्यर्थादिवर्जनं किम् ! व्यतिसर्पन्ति, व्यतिहिंसन्ति, व्यतिजल्पन्ति, व्यतिहसन्ति । ( परस्परान्योन्येतरेतरयोगे च न* ) । परस्परस्य व्यतिलुनन्ति । नाथृङ् उपतापैश्वर्याशीष्षु च ।

## आशिषि नाथः ॥ १५३ ॥

आशीरर्थादेव नाथ आत्मनेपदं स्यात् ।

## नाथः ॥ १५४ ॥

आत्मनेपदविषयस्य नाथो व्याप्यं कर्म वा स्यात्। सर्पिषो नाथते ४ । अनाथिष्टेत्यादि । अनाशिषि तु "नाथन्ति के नाम न लोकनाथम्" ।

## परावेर्जेः ॥ १५५ ॥

आभ्यां पराजयतेरात्मनेपदं स्यात् । पराजयते विजयते ४ । व्यजेष्ट ५। विजिग्ये ६ । विजेषीष्ट ७ । विजेता ८ । विजेष्यते ९ । व्यजेष्यत १० ।

इति भ्वादय आत्मनेपदिन ।

अथ भ्वादय उभयपदिनः ।

डुपचींष् पाके पच्धातुः । शेषा इतः ।

ईगितः ॥ १५६ ॥

ईदितो गितश्च धातोः कर्तुरात्मगामिनि फले आत्मनेपदं स्यादन्यथा परस्मैपदं स्यात् । पचति ४ । अपाक्षीत् अपाक्षाम् । पपाच पपक्थ-पेचिथ ६ । पच्यात् ७ । पक्ता ८ । पक्ष्यति ९ । अपक्ष्यत् १० । पचते ४ । अपक्त ५ । पेचे ६ । पक्षीष्ट ७ । पक्ता ८ । पक्ष्यते ९ । अपक्ष्यत १० । डुकृंग् करणे । गकार उभयपदार्थः ।

कृग्तनादेरुः ॥ १५७ ॥

कृगस्तनादिभ्यश्च कर्तृविहिते शिति उः स्यात् । नामिनो गुणोऽक्ङितीति गुणे, उश्नोरिति गुणे, करोति ।

अतः शित्युत् ॥ १५८ ॥

शित्यविति य उस्तन्निमित्तो यः कृगोऽकारस्तस्य उत्स्यात् । शिदवित् ङिद्वत्स्यात् इति गुणाभावे कुरुतः । इवर्णादेरिति वत्वे कुर्वन्ति । करोषि ।

कृगो यि च ॥ १५९ ॥

कृगः परस्योतो यादौ वमि चाविति लुक् स्यात् । कुर्वः कुर्मः ।

## कुरुच्छुरः ॥ १६० ॥

कुरुच्छुरोर्नामिनो रेफे परे दीर्घो न स्यात् । कुर्यात् २ । करोतु कुरुतात् ।

## असंयोगादोः ॥ १६१ ॥

असंयोगात्परो य उस्ततो हेर्लुक् स्यात् । कुरु-कुरुतात् । करवाणि करवाव करवाम ३ । अकरोत् अकुरुताम् । अकरवम् अकुर्व अकुर्म ४ । अकार्षीत् अकार्ष्टाम् अकार्षुः । अकार्षीः अकार्ष्टम् अकार्ष्ट । अकार्षम् अकार्ष्व अकार्ष्म ५ । चकार चक्रतुः चक्रुः । ऋतः इतीड्निषेधे, चकर्थ चकार-चकर । स्कसृवृ इत्यत्र स्कृग्रहणात् कृगो नेट् । चकृव चकृम ६ ।

## रिः शक्याशीर्ये ॥ १६२ ॥

ऋदन्तस्य धातो ऋतः शे क्ये आशीर्ये च परे रिः स्यात् । क्रियात् ७ । कर्ता ८ । हनृत इति इडागमे करिष्यति ९ । अकरिष्यत् १० । कुरुते कुर्वते १ । कुर्वीत २ । कुरुताम् । कुरुष्व । करवै करवावहै करवामहै ३ । अकुरुत । अकुरुथाः । अ-कुर्वि अकुर्वहि अकुर्महि ४ ।

## ऋवर्णात् ॥ १६३ ॥

ऋवर्णान्ताद्धातोरनिटावात्मनेपदे सिजाशिषौ

किद्वत्स्याताम् । धुड्ह्रस्वादिति सिज्लुपि अकृत अकृषाताम् । माकृथाः ।

## नाम्यन्तात्परोक्षाद्यतन्याशिषो धो ढः ॥ १६४ ॥

रेफान्तान्नाम्यन्ताच्च धातोरेतासां धो ढः स्यात् । अकृढ्वम् । अकृष्वहि अकृष्महि ५ । चक्रे । चकृषे चकृढ्वे ६ । कृषीष्ट । कृषीढ्वम् । ७ । कर्ता ८ । करिष्यते ९ । अकरिष्यत १० ।

## संपरेः कृगस्सट् ॥ १६५ ॥

आभ्यां परस्य कृग आदिः स्सट् स्यात् ।

## स्सटि समः ॥ १६६ ॥

स्सटि परे समः स स्यात् अनुस्वाऽरानुनासिकौ च पूर्वस्य । संस्करोति सँस्करोति ।

## लुक् ॥ १६७ ॥

समः सटि परे लुक् स्यात् । संस्करोति । समस्करोत् ४ । समस्कार्षीत् ५ । संचस्कार । सृजि दृशिस्कृ इत्यादिना वेटि स्कृच्छृतोऽकीति गुणे संचस्करिथ-संचस्कर्थ संचस्करिव ६ । संस्क्रियात् ७ । संस्कुरुते ४ । समस्कृषाताम् ५ । संचस्करे ६ । संस्कृषीष्ट ७ । असोदसिवृसहस्सटामिति पत्वे परिष्करोति ।

## उपाड्रूपासमवायप्रतियत्नविकारवा-क्याध्याहारे ॥ १६८ ॥

एष्वर्थेषु उपात्कृगः स्सट् स्यात् । कन्यामुपस्करोतीत्यादि ।

## वेः कृगः शब्दे चानाशे ॥ १६९ ॥

कर्मण्यसति शब्दे वा कर्मणि सत्यनाशार्थाद्विपूर्वात्कृग आत्मनेपदमेव स्यात् । विकुर्वतेऽश्वाः । क्रोष्टा विकुरुते स्वरान् । ( परानोः कृगः परस्मैपदमेव * ) पराकरोति । हृंग् हरणे । हरति ४ । अहार्षीत् ५ । जहार जहर्थ जह्रिम ६ । हरते ४ । अहृत ५ । जह्रे जह्रिषे ६ । ह्रषीष्ट ७ । हृगो गतताच्छील्ये आत्मनेपदमेव * ) पैतृकमश्वा अनुहरन्ते । पितुरनुहरते । एवं भृंग् भरणे धृंग् धारणे भरति धरतीत्यादि । णींग् प्रापणे । नयति ४ अनैषीत् अनैष्टाम् अनैषुः ५ । निनाय निनयिथ निनेथ ६ । नयते ४ । अनेष्ट ५ । निन्ये निन्यिषे ६ ।

## कर्तृस्थाऽमूर्ताप्यात् ॥ १७० ॥

कर्तृस्थममूर्तं कर्म यस्य तस्मान्निय आत्मनेपदमेव । श्रमं विनयते ( पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये निय आत्मनेपदमेव * ) नयते विद्वान् स्याद्वादे । अद्रुरुपसर्गेति णत्वे प्रणयति अन्तर्णयति । श्रिग् सेवायाम् । श्रयति ४ ।

किद्वत्स्याताम् । धुड्ह्रस्वादिति सिज्लुपि अकृत अकृषाताम् । माकृथाः ।

## नाम्यन्तात्परोक्षाद्यतन्याशिषो धो ढः ॥ १६४ ॥

रेफान्तान्नाम्यन्ताच्च धातोरेतासां धो ढः स्यात् । अकृढ्वम् । अकृष्वहि अकृष्महि ५ । चक्रे । चकृषे चकृढ्वे ६ । कृषीष्ट । कृषीढ्वम् । ७ । कर्ता ८ । करिष्यते ९ । अकरिष्यत १० ।

## संपरेः कृगस्सट् ॥ १६५ ॥

आभ्यां परस्य कृग आदिः स्सट् स्यात् ।

## स्सटि समः ॥ १६६ ॥

स्सटि परे समः स स्यात् अनुस्वाऽरानुनासिकौ च पूर्वस्य । संस्करोति सँस्करोति ।

## लुक् ॥ १६७ ॥

समः सटि परे लुक् स्यात् । संस्करोति । समस्करोत् ४ । समस्कार्षीत् ५ । संचस्कार । सृजिदृशिस्कृ इत्यादिना वेटि स्कृच्छृतोऽकीत्ति गुणे संचस्करिथ-संचस्कर्थ संचस्करिव ६ । संस्क्रियात् ७। संस्कुरुते ४ । समस्कृषाताम् ५ । संचस्करे ६ । संस्कृषीष्ट ७ । असोङ्सिवूसहस्सटामिति षत्वे परिष्करोति ।

## उपाङ्गूपासमवायप्रतियत्नविकारवाक्याध्याहारे ॥ १६८ ॥

एष्वर्थेषु उपात्कृगः स्सट् स्यात् । कन्यामुपस्करोतीत्यादि ।

## वेः कृगः शब्दे चानाशे ॥ १६९ ॥

कर्मण्यसति शब्दे वा कर्मणि सत्यनाशार्थाद्विपूर्वात्कृग आत्मनेपदमेव स्यात् । विकुर्वतेऽश्वाः । क्रोष्टा विकुरुते स्वरान् । ( परानोः कृगः परस्मैपदमेव * ) पराकरोति । हृंग् हरणे । हरति ४ । अहार्षीत् ५ । जहार जहर्थ जह्रिम ६ । हरते ४ । अहृत ५ । जह्रे जह्रिषे ६ । हृषीष्ट ७ । हृगो गतताच्छील्ये आत्मनेपदमेव * ) पैतृकमश्वा अनुहरन्ते । पितुरनुहरते । एवं भृंग् भरणे धृंग् धारणे भरति धरतीत्यादि । णींग् प्रापणे । नयति ४ अनैषीत् अनैष्टाम् अनैषुः ५ । निनाय निनयिथ निनेथ ६ । नयते ४ । अनेष्ट ५ । निन्ये निन्यिषे ६ ।

## कर्तृस्थाऽमूर्ताप्यात् ॥ १७० ॥

कर्तृस्थममूर्तं कर्म यस्य तस्मान्निय आत्मनेपदमेव । श्रमं विनयते ( पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये निय आत्मनेपदमेव * ) नयते विद्वान् स्याद्वादे । अदुरुपसर्गेति णत्वे प्रणयति अन्तर्णयति । श्रिग् सेवायाम् । श्रयति ४ ।

## णिश्रिद्रुस्रुकमः कर्तरि ङः ॥ १७१ ॥

ण्यन्तात् श्र्यादेश्च कर्तर्यद्यतन्या ङः स्यात्ततो द्विर्धातुरिति द्वित्वे संयोगादितीयादेशे अशिश्रियत् अशिश्रियताम् अशिश्रियन् ५ । शिश्राय शिश्रियतुः शिश्रियुः । शिश्रयिथ ६ । श्रीयात् ७ । श्रयिता ८ । श्रयिष्यति ९ । अश्रयिष्यत् १० । श्रयते ४ । अशिश्रियत अशिश्रियेताम् अशिश्रियन्त ५ । शिश्रिये ६ । श्रयिषीष्ट ७ । शपीं आक्रोशे । शपति ४ । अशाप्सीत् ५ । शशाप । शेपिथ-शशप्थ ६ । शपते ४ । अशप्त ५ । शेपे शेपिषे ६ । शप्सीष्ट ७ ।

## शप उपलम्भने ॥ १७२ ॥

उपलम्भनं प्रकाशनं शपथो वा तदर्थाच्छपतेरात्मनेपदमेव । मैत्राय शपते । अनुपलम्भने तु मैत्रं शपति । यजीं देवपूजासंगतिकरणदानेषु । यजति ४ । अयाक्षीत् ५ ।

## यजादिवशवचः सस्वरान्तस्था य्वृत् ॥ १७३ ॥

यजादेर्वशवचोश्च परोक्षायां द्वित्वे पूर्वस्य सस्वरान्तस्था यथासङ्ख्यं इउऋरूपा य्वृत्स्यात् । ञ्णितीति वृद्धौ इयाज ५ ।

## यजादिवचेः किति ॥ १७४ ॥

यजादेर्वचेश्च सस्वरान्तस्था किति परे य्वृत् स्यात् । ततो द्वित्वे व्यञ्जनस्यानादेर्लुगिति ज्लुकि, दीर्घे च ईजतुः ईजुः । वित्परोक्षायाः कित्त्वाभावात् इयजिथ । यजसृजेति षत्वे इयष्ठ ६ । इज्यात् ७ । यष्टा ८ । यक्ष्यति ९ । अयक्ष्यत् १० । यजते अयजत ४ । अयष्ट अयक्षाताम् ५ । ईजे ईजिषे ६ । यक्षीष्ट ७ । वेंग् तन्तुसन्ताने । वयति वयेत् वयतु अवयत् ४ । आत्सन्ध्यक्षरस्येत्यात्वे । अवासीत् अवासिष्टाम् ५ ।

## वेर्वय् ॥ १७५ ॥

वेगः परोक्षायां वय् वा स्यात् । उवाय । यजादिवचेः कितीति य्वृति द्वित्वे ऊय् इति भवति ।

## न वयो य् ॥ १७६ ॥

वेगो वयो यः परोक्षायां य्वृन्न स्यात् । ऊयतुः ऊयुः । यजादिवशव्रच इत्यादिना पूर्वस्य य्वृति उवयिथ । स्वरान्तत्वान्नित्यमिट् । ऊयथुः ऊय । उवाय-उवय ऊयिव ऊयिम । वयादेशाभावे तु ।

## वेरयः ॥ १७७ ॥

वेगोऽयन्तस्य पूर्वस्य परस्य च परोक्षायां य्वृन्न स्यात् । ववौ ववतुः ववुः ।

### अविति वा ॥ १७८ ॥

वेगोऽयकारान्तस्याविति परोक्षायां य्वृद्वा न स्यात् । द्वित्वे कृते परत्वाद्धातोरुवादेशे पश्चात् समानदीर्घः । ऊवतुः ऊवुः । ववाथ-वविथ ६ । स्वरान्तत्वादिड्विकल्पः । ऊयात् ७ । वाता ८ । वास्यति ९ । अवास्यत् १० । आत्मनेपदेऽपि वयते ४ । अवास्त ५ । परोक्षायां वयादेशे ऊये ऊयिषे । पक्षे ववे वविषे ६ । वासीष्ट ७ । व्येंग् संवरणे । संव्ययति ४ । अव्यासीत् ५ ।

### ज्याव्येव्यधिव्यचिव्यथेरिः ॥ १७९ ॥

एषां पञ्चानां परोक्षायां द्वित्वे सति पूर्वस्य इः स्यात् । यजादिवशिति य्वृद्वाधनार्थमिकारस्यापि इः । नामिनोऽकलिहलेरिति वृद्धौ आयादेशे च विव्याय । यजादिवचेरिति य्वृति योऽनेकस्वरस्येति यत्वे च विव्यतुः विव्युः ।

### ऋच्छ्व्येऽद् इट् ॥ १८० ॥

एभ्यश्चतुर्भ्यः परस्य थवो नित्यमिट् स्यात् । विव्ययिथ विव्याय विव्यय ६ । यजादिवचेः कि-तीति य्वृति वीयात् ७ । व्याता ८ । व्यास्यति ९ । अव्यास्यत् १० । व्ययते ४ । अव्यास्त ५ । विव्ये विव्यिषे ६ । व्यासीष्ट ७ । ह्वेंग् स्पर्धाशब्दयोः । आह्वयति ४ ।

## ह्वालिप्सिचः ॥ १८१ ॥

एभ्यस्त्रिभ्योऽद्यतन्यामङ् स्यात् । आह्वत् आह्वताम् आह्वन् ।

## ह्वित्वे ह्वः ॥ १८२ ॥

ह्वेगो द्वित्वविषये सस्वरान्तस्था य्वृत्स्यात् । ततो हुहु इति द्वित्वे आजुहाव । धातोरिवर्णोवर्णस्येत्युवादेशे आजुहुवतुः आजुहुवुः । आजुहोथ-आजुहविथ आजुहाव-आजुहव ६ । आहूयात् ७ । आह्वाता ८ । आह्वास्यति ९ । आह्वास्यत् १० । आह्वयते ४ ।

## वात्मने ॥ १८३ ॥

ह्वादिभ्यस्त्रिभ्योऽद्यतन्यामात्मनेपदेऽङ्वा स्यात् । आह्वत-आह्वास्त आह्वाताम्-आह्वासाताम् ५ । आजुहुवे आजुहुविषे ६ । आह्वासीष्ट ७ ।

## ह्वः स्पर्धे ॥ १८४ ॥

आङ्पूर्वात् ह्वयतेः स्पर्धे गम्ये आत्मनेपदमेव स्यात् । मल्लो मल्लमाह्वयते । अन्यत्र तु गामाह्वयति ।

## संनिवेः ॥ १८५ ॥

एभ्योऽपि ह्वयतेरात्मनेपदमेव । डुवपीं बीजसन्ताने । वपति ४ । अवाप्सीत् ५ । द्वित्वे पूर्वस्य य्वृति, उवाप । य्वृति द्वित्वे, ऊपतुः ऊपुः । उवपिथ-

उवप्थ ऊपथुः ऊप । उवाप-उवप ६ । उप्यात् ७। वप्ता ८। वप्स्यति ९ । अवप्स्यत् १० । वपते ४ । अवप्त ५ । ऊपे ऊपिषे ६ । वप्सीष्ट ७ । वहीं प्रापणे । वहति ४ । अवाक्षीत् ५ । सहिवहेरोच्चावर्णस्येति अवोढाम् अवाक्षुः ५ । उवाह उवहिथ । इडभावे पक्षे उवोढ ६ । उह्यात् ७ । वोढा ८ । वक्ष्यति ९ । अवक्ष्यत् १० । वहते ४ । अवोढ अवक्षाताम् अवक्षत ५ । ऊहे ऊहिषे ६ । वक्षीष्ट ७ । (प्राद्वहः परस्मैपदमेव*) प्रवहति । (परेश्च*) परिवहति । ट्वोश्वि गतिवृद्ध्योः । श्वयति अश्वयत् ४ । टूधेश्वेर्वेति वैकल्पिके डे, द्विर्धातुरिति द्वित्वे, संयोगादितीयादेशे, अशिश्वियत् अशिश्वियताम् अशिश्वियन् । पक्षे ऋदिच्छ्वीत्यादिना वैकल्पिके ङि श्वयत्यसूवच इत्यादिना श्वादेशे च अश्वत् अश्वताम् अश्वन् । पक्षे सिजागमे इडागमे ईदागमे नश्वीति वृद्धिनिषेधे गुणे यादेशे सिज्लोपे अश्वयीत् अश्वयिष्टाम् अश्वयिषुः । अश्वयीः ५ ।

## वा परोक्षा यङि ॥ १८६ ॥

श्वेः सस्वरान्तस्था परोक्षायङोर्वृद्वा स्यात् । ततः शुशु इति द्वित्वे शुशाव शुशुवतुः शुशुवुः । शुशविथ पक्षे शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ ६ । यजादियचेरिति य्वृति शूयात् शूयास्ताम् ७ । श्वयिता ८ । श्वयिष्यति ९ । अश्व-

यिष्यत् १० । वद व्यक्तायां वाचि । वदति ४ । वदव्रज लू इति वृद्धौ अवादीत् अवादिष्टाम् अवादिषुः । मैवं वादीः ५ । उवाद ऊदतुः ऊदुः । उवदिथ ७ । वदिता ८ । वसं निवासे । वसति ४ ।

## सस्तः सि ॥ १८७ ॥

सन्तस्य धातोः सस्याशिति सादौ प्रत्यये विषयभूते तः स्यादिति सिजागमात्प्रागेव सस्य तः । अवात्सीत् अवात्ताम् अवात्सुः ५ । उवास ।

## घस्वसः ॥ १८८ ॥

नाम्यादेः परस्य घस्वसोः सः षः स्यात् । ऊषतुः ऊषुः । उवसिथ उवस्थ उवास उवस ६ । उष्यात् ७ । वस्ता ८ । वत्स्यति ९ । श्विवद्वसः परस्मैपदिनः । टुयाचृग् याञ्चायाम् । याचति ४ । अयाचीत् । पक्षे ऋदिच्छ्वीत्यङागमे अयाचत् ५ । ययाच ६ । याच्यात् ७ । याचिता ८ । याचिष्यति ९ । अयाचिष्यत् १० । याचते ४ । अयाचिष्ट ५ । ययाचे ६ । याचिषीष्ट ७ । गुहौग् संवरणे ।

## गोहः स्वरे ॥ १८९ ॥

कृतगुणगुहः स्वरादावुपान्त्यस्य ऊत्स्यात् । गूहति १ । गूहेत् २ । गूहतु ३ । अगूहत् ४ । अगूहीत् । इडभावे हशिट इति सकि अघुक्षत् अगूहिष्टाम्-

अघुक्षताम् अगूहिषु-अघुक्षन् ५। जुगूह जुगुहतुः जुगुहुः। जुगूहिथ-जुगोढ जुगुहथुः जुगुह ६। गुह्यात् ७। गूहिता-गोढा ८। गूहिष्यति-घोक्ष्यति ९। अगूहिष्यत्-अघोक्ष्यत् १०। गूहते ४। अगूहिष्ट। इडभावे सक्।

## दुहदिहलिहगुहो दन्त्यात्मने वा सकः ॥ १९० ॥

एभ्यश्चतुर्भ्यः परस्य सको दन्त्यादावात्मनेपदे लुग् वा स्यात्। ढस्तड्डे इति ढलोपे उकारस्य दीर्घे च अगूढ। पक्षे अघुक्षत अगूहिषाताम्।

## स्वरेऽतः ॥ १९१ ॥

सकोऽस्य स्वरादौ प्रत्यये लुक् स्यात्। अघुक्षाताम् अगूहिषत-अघुक्षन्त। अगूहिष्ठाः-अगूढाः-अघुक्षथाः। अगूहिष्वहि-अगुह्वहि-अघुक्षावहि ५। जुगुहे ६। गूहिषीष्ट-घुक्षीष्ट ७। भजीं सेवायाम्। भजति ४। अभाक्षीत् ५। बभाज ६। भज्यात् ७। भक्ता ८। भक्ष्यति ९। अभक्ष्यत् १०। भजते ४। अभक्त ५। भेजे भेजाते ६। भक्षीष्ट ७। राजृग् टुभ्राजि दीप्तौ। राजति ४। ऋदिच्छ्वीत्यादिनाङि अराजत्। पक्षे सिचि अराजीत् अराजताम्-अराजिष्टाम् ५। रराज।

## जॄभ्रमवमत्रसफणस्यमस्वनराजभ्रा- जभ्रासभ्लासो वा ॥ १९२ ॥

एषामेकादशानां स्वरस्याऽवित्परोक्षासेट्थवोरेर्वा स्यात् न च द्विः । रेजतुः-रराजतुः रेजुः-रराजुः । रेजिथ-रराजिथ ६ । राज्यात् ७ । राजिता ८ । राजिष्यति ९ । अराजिष्यत् १० । राजते ४ । अराजिष्ट ५ । रेजे-रराजे रेजाते-रराजाते रेजिरे-रराजिरे ६ । राजिषीष्ट ७ । एवं भ्राजिरपि । रञ्जीं रागे ।

## अकट्‌घिनोश्च रञ्जेः ॥ १९३ ॥

रञ्जेरकटि घिनणि शवि चोपान्त्यनो लुक् स्यात् । रजति । अरजत् ४ । अरांक्षीत् अराङ्क्ताम् अराङ्क्षुः ५ । ररञ्ज ररञ्जतुः ६ । रज्यात् ७ । रङ्क्ता ८ । रङ्क्ष्यति ९ । अरङ्क्ष्यत् १० । रजते ४ । अरङ्क्त अरङ्क्षातां अरङ्क्षत ५ । ररञ्जे ६ । रङ्क्षीष्ट ७ । रङ्क्ता ८ । रङ्क्ष्यते ९ । अरङ्क्ष्यत १० ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां भ्वादयः समाप्ताः ।

---

## अथ अदादयः ॥

अदं प्सांक् भक्षणे । कर्तर्यनद्भ्य इत्यत्रादादिवर्जनादेषां शवभावः । अत्ति अत्तः अदन्ति । अद्यात् । अत्तु-अत्तात् ।

## हुधुटो हेर्धिः ॥ १ ॥

होर्धुडन्ताच्च परस्य हेर्धिः स्यात् । अद्धि- अत्तात् ३ ।

## अदश्चाट् ॥ २ ॥

अदेरुत्पञ्चकाच्च दिस्योरादिरट् स्यात् । स्वरादेस्तास्विति वृद्धौ । आदत् आत्ताम् आदन् । आदः आत्तम् आत्त । आदम् आद्व आद्म ।

## घस्लृसनद्यतनी घञचलि ॥ ३ ॥

एषु पञ्चसु परेष्वदेर्घस्लृः स्यात् । लृदिद्युतादिपुष्यादेरित्यङ् । अघसत् अघसताम् अघसन्

## परोक्षायां नवा ॥ ४ ॥

अदेः परोक्षायां घस्लृ आदेशो वा स्यात् । जघास । द्वित्वे गमहनेत्यकारलोपे, अघोषे प्रथमोऽशिट इति घस्य कत्वे, घस्वस इति षत्वे । जक्षतुः जक्षुः । ऋवृव्येऽद इट् । जघसिथ जक्षथुः जक्ष । जघास-जघस जक्षिव जक्षिम । पक्षे ।

## अस्यादेराः परोक्षायाम् ॥ ५ ॥

अस्यां द्वित्वे पूर्वस्यादेरतः आः स्यात् । आद आदतुः आदुः । आदिथ ६ । अद्यात् ७ । अत्ता ८ । अत्स्यति ९ । आत्स्यत् १० । प्साति प्सातः प्सान्ति १ । प्सायात् २ । प्सातु-प्सातात् ३ । अप्सात् अप्साताम् ।

## वा द्विषातोऽनः पुस् ॥ ६ ॥

द्विष आदन्ताच्च परस्य शितोऽनः पुस् वा स्यात् । अप्सुः-अप्सान् ४ । अप्सासीत् अप्सासिष्टाम् अप्सासिषुः ५ । पप्सौ पप्सतुः पप्सुः ६ । प्सायात्-प्सेयात् ७ । प्साता ८ । प्सास्यति ९ । अप्सास्यत् १० । एवं भांक् दीप्तौ । भाति ४ । अभासीत् ५ । बभौ बभाथ-बभिथ ६ । यांक् प्रापणे । याति ४ । अयासीत् ५ । ययौ ६ । ष्णांक् शौचे । स्नाति ४ । अस्नासीत् ५ । सस्नौ ६ । श्रांक् पाके । श्राति ४ । अश्रासीत् ५ । शश्रौ ६ । द्रांक् कुत्सितगतौ । द्राति । नियोगे निद्राति ४ । न्यद्रासीत् ५ । निदद्रौ ६ । प्रांक् पूरणे । प्राति ४ । अप्रासीत् ५ । पप्रौ ६ । प्रेयात्-प्रायात् ७ । प्राता ८ । प्रास्यति ९ । अप्रास्यत् १० । वांक् गतिगन्धनयोः । ख्यांक् प्रकथने । पांक् रक्षणे । लांक् आदाने । रांक् दाने इत्यादयो भातिवत् । मांक् माने । दांवक् लवने एतावपि तथैव । किन्त्वाशिषि गामापास्थेति मेयात्, दायात् । इंणक् गतौ । एति । अविच्छितो ङित्त्वाद् गुणाभावे इतः ।

## ह्विणोरप्विति व्यौ ॥ ७ ॥

ह्रोरिणश्च नामिनः स्वरादावपित्यविति यथासङ्ख्यं व्यौ स्याताम् । यन्ति । एपि इथः इथ ।

एमि इवः इमः १। इयात् इयाताम् इयुः २। एतु-इतात् इताम् यन्तु । इहि-इतात् इतम् इत। अयानि अयाव अयाम ३।

एत्यस्तेर्वृद्धिः ॥ ८ ॥

इणिकोरस्तेश्चादेः स्वरस्य ह्यस्तन्यां वृद्धिः स्यात्। अमाङ्गयत्वाल्लुगपवादोऽयम्। ऐत् ऐताम् आयन्। ऐः ऐतम् ऐत। आयम् ऐव ऐम ४। पिबैतिदेति सिज्लोपे।

इणिकोर्गाः ॥ ९ ॥

इणिकोरद्यतन्यां विषये गाः स्यात् । अगात् अगाताम् अगुः ५ । द्वित्वे द्वितीयस्य वृद्धावायादेशे।

पूर्वस्यास्वे स्वरे य्वोरियुव् ॥ १० ॥

द्वित्वे सति यः पूर्वस्तत्सम्बन्धिनोरिवर्णोवर्णयोरस्वे स्वरे इयुवौ स्याताम्। इयाय।

इणः ॥ ११ ॥

## आशिषीणः ॥ १२ ॥

उपसर्गात्परस्येण ईतः क्ङिति यादावाशिषि ह्रस्वः स्यात् । उदियात् । शेषं प्राग्वत् । इंङ् स्मरणे । अधिपूर्व एवायम् । अध्येति अधीतः ।

## इको वा ॥ १३ ॥

इकः स्वरादाववि्ति शिति य्वा स्यात् । अधियन्ति-अधीयन्ति १ । शेषमिणवत् । आशिषि ह्रस्वाभावो विशेषः । अधीयात् अधीयास्ताम् १० । वींक् प्रजनकान्त्यसनखादनेषु । वेत्ति वीतः वियन्ति १ । वीयात् २ । वेतु-वीतात् वीहि ३ । अवेत् अवीताम् अवियन् ४ । अवैषीत् अवैष्टाम् ५ । विवाय विव्यतुः ६ । वीयात् ७ । वेता ८ । वेष्यति ९ । अवेष्यत् १० । षुंक् प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् ।

## उत और्विति व्यञ्जनेऽद्वेः ॥ १४ ॥

अद्व्युक्तस्योदन्तधातोर्व्यञ्जनादौ विति औः स्यात् । सौति सुतः सुवन्ति १ । सूयात् २ । सौतु-सुतात् ३ । असौत् ।

## धूगसुस्तोः परस्मै ॥ १५ ॥

एभ्यः परस्मैपदे सिच आदेरिट् स्यात् । सु इति सुमात्रग्रहणम् । असावीत् असाविष्टाम् । सुनोतेरेव ग्रहणमिति पक्षे । असौषीत् असौष्टाम् ५ ।

एमि इवः इमः १ । इयात् इयाताम् इयुः २ । एतु-इतात् इताम् यन्तु । इहि-इतात् इतम् इत । अयानि अयाव अयाम ३ ।

## एत्यस्तेर्वृद्धिः ॥ ८ ॥

इणिकोरस्तेश्चादेः स्वरस्य ह्यस्तन्यां वृद्धिः स्यात् । अमाङायत्वाल्लुगपवादोऽयम् । ऐत् ऐताम् आयन् । ऐः ऐतम् ऐत । आयम् ऐव ऐम ४ । पिबैतिदेति सिज्लोपे ।

## इणिकोर्गाः ॥ ९ ॥

इणिकोरद्यतन्यां विषये गाः स्यात् । अगात् अगाताम् अगुः ५ । द्वित्वे द्वितीयस्य वृद्धावायादेशे ।

## पूर्वस्यास्वे स्वरे य्वोरियुव् ॥ १० ॥

द्वित्वे सति यः पूर्वस्तत्सम्बन्धिनोरिवर्णोवर्णयोरस्वे स्वरे इयुवौ स्याताम् । इयाय ।

## इणः ॥ ११ ॥

अस्य स्वरादौ प्रत्यये इय् स्यात् । दीर्घे । ईयतुः ईयुः । वेटि द्वितीयस्य गुणेऽयादेशे इयादेशे च, इययिथ-इयेथ ईयथुः ईय । इयाय-इयय ईयिव ईयिम ६ । दीर्घश्चीति दीर्घे । ईयात् ईयास्ताम् ईयासुः ७ । एता ८ । एष्यति ९ । ऐष्यत् १० ।

## आशिषीणः ॥ १२ ॥

उपसर्गात्परस्येण ईतः क्ङिति यादावाशिषि ह्रस्वः स्यात् । उदियात् । शेषं प्राग्वत् । इंङ् स्मरणे । अधिपूर्व एवायम् । अध्येति अधीतः ।

## इको वा ॥ १३ ॥

इकः स्वरादावविति क्ङिति य्वा स्यात् । अधियन्ति-अधीयन्ति १ । शेषमिणवत् । आशिषि ह्रस्वाभावो विशेषः । अधीयात् अधीयास्ताम् १० । वींक् प्रजनकान्त्यसनखादनेषु । वेति वीतः वियन्ति १ । वीयात् २ । वेतु-वीतात् वीहि ३ । अवेत् अवीताम् अवियन् ४ । अवैषीत् अवैष्टाम् ५ । विवाय विव्यतुः ६ । वीयात् ७ । वेता ८ । वेष्यति ९ । अवेष्यत् १० । पुंक् प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् ।

## उत औविति व्यञ्जनेऽद्वेः ॥ १४ ॥

अद्व्युक्तस्योदन्तधातोर्व्यञ्जनादौ विति औः स्यात् । सौति सुतः सुवन्ति १ । सूयात् २ । सौतु-सुतात् ३ । असौत् ।

## धूगूसुस्तोः परस्मै ॥ १५ ॥

एभ्यः परस्मैपदे सिच आदेरिट् स्यात् । सु इति सुमात्रग्रहणम् । असावीत् असाविष्टाम् । सुनोतेरेव ग्रहणमिति पक्षे । असौषीत् असौष्टाम् ५ ।

सुषाव ६ । सूयात् ७ । सोता ८ । सोष्यति ९ । असोष्यत् १० । तुंक् हिंसावृत्तिपूरणेषु ।

## यङ्तुरुस्तोर्बहुलम् ॥ १६ ॥

यङ्लुबन्ताचुरुस्तुभ्यश्च परो व्यञ्जनादौ विति ईत् बहुलं परादिः स्यात् । तवीति-तौति तुतः तुवन्ति १ । तुयात् २ । तौतु-तवीतु तुतात् ३ । अतौत् ४ । केचित्तु सर्वत्र व्यञ्जनादौ शितीतमिच्छन्ति । तुतः-तुवीतः तुयात्-तुवीयात् ४ । अतौषीत् ५ । तुताव ६ । तूयात् ७ । तोता ८ । तोष्यति ९ । अतोष्यत् १० । टुक्षु रु कुंक् शब्दे । टुकार इत् । रौति-रवीति ४ । अरावीत् ५ । क्षुकु सौतिवत्, किन्तु क्षोः सेट्त्वात् अक्षावीत् ५ । युक् मिश्रणे । णुक् स्तुतौ इत्यादयोऽपि सौतिवत् । रुदृक् अश्रुविमोचने ।

## रुत्पञ्चकाच्छिदयः ॥ १७ ॥

रुदादेः पञ्चतः परस्य व्यञ्जनादेः शितोऽयादेरादिरिट् स्यात् । रोदिति रुदितः रुदन्ति १ । रुद्यात् २ । रोदितु-रुदितात् रुदन्तु । रुदिहि-रुदितात् रुदितम् रुदित । रोदानि रोदाव रोदाम ३ ।

## दिस्योरीट् ॥ १८ ॥

रुत्पञ्चकाच्छितो दिस्योरादिरीट् स्यात् । अरोदीत् । अदश्चाडित्यडागमे च, अरोदत् अरुदिताम्

अरुदन् । अरोदीः-अरोदः अरुदितम् अरुदित । अरोदम् अरुदिव अरुदिम ४ । अस्य सेट्त्वादद्यतन्याम्, अरोदीत् । पक्षे ऋदिच्छ्वीत्यङि, अरुदत् अरुदताम् अरोदिष्टाम् अरोदिषुः-अरुदन् ५ । रुरोद रुरुदतुः रुरुदुः ६ । रुद्यात् ७ । रोदिता ८ । रोदिष्यति ९ । अरोदिष्यत् १० । ञिष्वपंक् शये । स्वपिति १ । स्वप्यात् २ । स्वपितु ३ । अस्वपीत् अस्वपत् ४ । अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः ५ । द्वित्वे भूस्वपोरिति पूर्वस्योत्वे, सुष्वाप ६ ।

## स्वपेर्यङ्ङे च ॥ १९ ॥

स्वपेर्यङि ङे किति च सस्वरान्तस्था य्वृत्स्यात् । ततो द्वित्वे, सुषुपतुः सुषुपुः । सुष्वपिथ सुष्वपथ ६ । सुप्यात् ७ । स्वप्ता ८ । स्वप्स्यति ९ । अस्वप्स्यत् १० । अन श्वसक् प्राणने प्रपूर्वः । अदुरुपसर्गेति णत्वे द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा इति णत्वे । प्राणिति १ । प्राण्यात् २ । प्राणितु ३ । प्राणीत् प्राणत् ४ । प्राणीत् प्राणिष्टाम् ५ । प्राण प्राणतुः ६ । प्राण्यात् ७ । प्राणिता ८ । प्राणिष्यति ९ । प्राणिष्यत् १० । श्वसिति १ । श्वस्यात् २ । श्वसितु ३ । अश्वसीत्-अश्वसत् ४ । व्यञ्जनादेर्वोपान्त्यस्येति वृद्धिविकल्पे, अश्वासीत्-अश्वसीत् ५ । शश्वास शश्वसतुः ६ । श्वस्यात् ७ । श्वसिता ८ ।

श्वसिष्यति ९ । अश्वसिष्यत् १० । जक्षक् भक्षहसनयोः । जक्षिति जक्षितः ।

## अन्तो नो लुक् ॥ २० ॥

श्युक्तजक्षपञ्चकात्परस्यान्तो नो लुक्स्यात् । जक्षति १ । जक्ष्यात् २ । जक्षितु ३ । अजक्षीत् अजक्षिताम् ।

## श्युक्तजक्षपञ्चतः ॥ २१ ॥

कृतद्विर्वाजक्षपञ्चकाच्च परस्य शितोऽनः पुस् स्यात् । अजक्षुः ४ । अजक्षीत् ५ । जजक्ष ६ । जक्ष्यात् ७ । जक्षिता ८ । जक्षिष्यति ९ । अजक्षिष्यत् १० । इति रुतपञ्चकम् । दरिद्राक् दुर्गतौ । दरिद्राति ।

## इर्दरिद्रः ॥ २२ ॥

दरिद्रो व्यञ्जनादौ शित्यवित्यात इः स्यात् । दरिद्रितः ।

## श्नश्चातः ॥ २३ ॥

श्युक्तजक्षपञ्चतः श्नश्च शित्यवित्यातो लुक् स्यात् । दरिद्रति दरिद्रासि १ । दरिद्रियात् २ । दरिद्रातु दरिद्रितात् दरिद्रिहि ३ । अदरिद्रात् अदरिद्रिताम् अदरिद्रुः ४ ।

## दरिद्रोऽद्यतन्यां वा ॥ २४ ॥

दरिद्रोऽद्यतन्यां विषये लुग् वा स्यात् । अदरिद्रीत् अदरिद्रिष्टाम् अदरिद्रिषुः । अदरिद्रासीत् अदरिद्रासिष्टाम् अदरिद्रासिषुः ।

## धातोरनेकस्वरादाम् परोक्षायाः । कृभ्वस्ति चानु तदन्तम् ॥ २५ ॥

अनेकस्वराद्धातोः परस्याः परोक्षायाः स्थाने आम् स्यात् । आमन्ताच्च परे कृभ्वस्तयः परोक्षान्ता अनुप्रयुज्यन्ते । दरिद्रांचकार ददरिद्रौ ६ ।

## अशित्यस्सन्णकचूणकानटि ॥ २६ ॥

सादिसन्नादिवर्जे अशिति विषये लुक् स्यात् । दरिद्र्यात् ७ । दरिद्रिता ८ । दरिद्रिष्यति ९ । अदरिद्रिष्यत् १० । जागृक् निद्राक्षये । जागर्ति जागृतः जाग्रति । जागर्षि १ । जागृयात् २ । जागर्तु-जागृतात् जागृताम् जाग्रतु । जागृहि-जागृतात् ३ । नामिनो गुणोऽक्ङितीति गुणे ।

## व्यञ्जनादेः सश्च दः ॥ २७ ॥

धातोर्व्यञ्जनात्परस्य देर्लुक् यथासंभवं धातुसकारस्य च दः स्यात् । अजागः अजागृताम् ।

## पुस्पौ ॥ २८ ॥

नाम्यन्तस्य धातोः पुसि पौ च गुणः स्यात् । अजागरुः ।

## सेः स्द्धां च रुर्वा ॥ २९ ॥

धातोर्व्यञ्जनात्परस्य सेर्लुक् सकारदकारधकाराणां च यथासंभवं रुर्वा । अजागः अजागृतम् अजागृत । अजागरम् ४ । न श्विजागृशसेति वृद्ध्यभावे, अजागरीत् अजागरिष्टाम् अजागरिषुः ५ ।

## जागुषसमिन्धेर्नवा ॥ ३० ॥

एभ्यः परोक्षाया आम् वा स्यात् । जागराञ्चकार ३ । पक्षे ।

## आद्योंश एकस्वरः ॥ ३१ ॥

अनेकस्वरस्य धातोराद्य एकस्वरोऽवयवः परोक्षाडे परे द्विः स्यात् । ( जागुर्ञिणवि वृद्धिः स्यात्* ) नामिनोऽकलिहलेरिति सिद्धे नियमार्थमिदम् । तेनान्यत्र ञ्णिति वृद्धिर्न स्यात् । जजागार । अवित्परोक्षायां किर्त्वे ( जागु' किति गुणः स्यात्* ) जजागरतुः जजागरुः । अनेकस्वरत्वात् ऋत इतीड्निषेधाभावे जजागरिथ जजागरथुः जजागर । जजागार-जजागर जजागरिव जजागरिम ६ । जागर्यात् ७ । जागरिता ८ । जागरिष्यति ९ । अजागरिष्यत् १० । चकासृ दीप्तौ । ऋकार इत् । चकास्ति चकास्तः चकासति १ । चकास्यात् २ । चकास्तु ( हेधिः सोधि वा लुक्* ) चकाधि चकाद्धि ३ । अचकात् अचकास्ताम् अ-

चकासुः । अचकाः-अचकात् ४ । अचकासीत् अचकासिष्टाम् अचकासिषुः । ऋदित्त्वादङागमे अचकासत् ५ । चकासांचकार ६ । चकास्यात् । ७ । चकासिता ८ । चकासिष्यति ९ । अचकासिष्यत् १० । शासू अनुशिष्टौ । शास्ति ।

## इसासः शासोऽङ्व्यञ्जने ॥ ३२ ॥

शास्तेरंशस्यासोऽङि क्ङिति व्यञ्जनादौ च परे इस् स्यात् । शिष्टः शासति । शास्सि शिष्टः शिष्ट । शास्मि शिष्वः शिष्मः १ । शिष्यात् २ । शास्तु-शिष्टात् शिष्टाम् शासतु ।

## शासऽसूहनः शाध्येधिजहि ॥ ३३ ॥

एषां त्रयाणां ह्यन्तानां यथासङ्ख्यं शाध्येधिजहयः स्युः । शाधि-शिष्टात् शिष्टम् शिष्ट । शासानि शासाव शासाम ३ । अशात् अशिष्टाम् अशासुः । अशाः-अशात् अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म ४ ।

## शास्त्यसूवक्तिख्यातेरङ् ॥ ३४ ॥

एभ्यश्चतुर्भ्योऽद्यतन्यामङ् स्यात् । अशिषत् अशिषताम् अशिषन् ५ । शशास शशासतुः ६ । शिष्यात् ७ । शास्ता ८ । शासिष्यति ९ । अशासिष्यत् १० । वचंक् भाषणे । वक्ति वक्तः । अ-

न्तिपरस्य वचेः प्रायोऽप्रयोगः। वक्षि वक्थः वक्थ। वँचिम वच्वः वच्मः १। वच्यात् २। वक्तु-वक्तात् वक्ताम् वचन्तु। वग्धि ३। अवक्-अवग् अवक्ताम् अवचन्। अवक्-अवग् अवक्तम् अवक्त। अवचम् अवच्व अवच्म ४। शास्त्यसूवक्तीत्यङि, श्वयत्यसूवचेति वोचादेशे, अवोचत् अवोचताम् अवोचन् ५। द्वित्वानन्तरं यजादिवशवच इति य्वृति, उवाच। यजादिवचेरिति य्वृति द्वित्वे, ऊचतुः ऊचुः। उवचिथ-उवक्थ ६। उच्यात् ७। वक्ता ८। वक्ष्यति ९। अवक्ष्यत् १०। मृजौक् शुद्धौ। लघोरुपान्त्यस्येति गुणे।

## मृजोऽस्य वृद्धिः ॥ ३५ ॥

मृजेर्गुणे सत्यकारस्य वृद्धिः स्यात्। यजसृजेति षत्वे, मार्ष्टि मृष्टः।

## ऋतः स्वरे वा ॥ ३६ ॥

मृजेर्ऋतः स्वरादौ प्रत्यये वृद्धिर्वा स्यात्। मार्जन्ति-मृजन्ति। षढोः कः सीति कत्वे, मार्क्षि मृष्ठः मृष्ट। मार्ज्मि मृज्वः मृज्मः १। मृज्यात् २। मार्ष्टु-मृष्टात् मृष्टाम् मृजन्तु-मार्जन्तु। हुधुटो हेर्धिरिति, मृड्ढि-मृष्टात् मृष्टम् मृष्ट। मार्जानि मार्जाव मार्जाम ३। अमार्ट्-अमार्ड् अमृष्टाम् अमृजन्-अमार्जन्। अमार्ट्-अमार्ड् अमृष्टम् अमृष्ट।

अमार्जम् अमृज्व अमृज्म ४ । औदित्वादिड्विकल्पे, अमार्जीत्-अमार्क्षीत् ५ । ममार्ज ममार्जतुः-ममृजतुः ममार्जुः-ममृजुः । ममार्जिथ ६ । मृज्यात् ७ । मार्जिता-मार्ष्टा ८ । मार्जिष्यति-मार्क्ष्यति ९ । अमार्जिष्यत्-अमार्क्ष्यत् १० । विदक् ज्ञाने । वेत्ति वित्तः विदन्ति । वेत्सि वित्थः वित्थ । वेद्मि विद्वः विद्मः ।

## तिवां णवः परस्मै ॥ ३७ ॥

वेत्तेः परेषां तिवादीनां परस्मैपदान्येव णवादयो नव यथासङ्ख्यं वा स्युः । वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म १ । विद्यात् विद्याताम् विद्युः २ ।

## पञ्चम्याः कृग् ॥ ३८ ॥

वेत्तेः परस्याः पञ्चम्याः किदाम् वा स्यात्, आमन्ताच्च पञ्चम्यन्तः कृगनुप्रयुज्यते । विदांकरोतु । पक्षे वेत्तु वित्तात् वित्ताम् विदन्तु । हुधुटो हेर्धिरिति, विद्धि-वित्तात् वित्तम् वित्त । वेदानि वेदाव वेदाम ३ । व्यञ्जनाद्देरिति दिव्लुपि, अवेत् अवित्ताम् । सिज्विदो भुव इत्युसि, अविदुः । सेः सद्धां च रुर्वा इति सेर्लुपि, दस्य रुत्वे । अवेः अवित्तम् अवित्त । अवेदम् अविद्व अविद्म ४ । अवेदीत् अवेदिष्टाम् अवेदिषुः ५ ।

## वेत्तेः कित् ॥ ३९ ॥

वेत्तेः परस्याः परोक्षाया आम्वा स्यात्, स च कित्। विदाञ्चकार ३। पक्षे विवेद विविदतुः विविदुः। विवेदिथ ६। विद्यात् विद्यास्ताम् विद्यासुः ७। वेदिता ८। वेदिष्यति ९। अवेदिष्यत् १०। हनंक् हिंसागत्योः। हन्ति। नेर्ङ्मादेति णत्वे, प्रणिहन्ति। यमिरमीति न्लुपि, हतः। गमहनेत्युपान्त्यलुपि, हनो ह्नो घ्न इति घ्नादेशे, घ्नन्ति। हनो घीति णत्वप्रतिषेधे, प्रघ्नन्ति। हंसि हथः हथ। हन्मि हन्वः हन्मः।

## हनो वमि वा ॥ ४० ॥

अदुरुपसर्गान्तस्थाद्रादेः परस्य हन्तेर्नो ण् स्यात्, म्वोः परयोस्तु वा। प्रहण्मि-प्रहन्मि प्रहण्वः-प्रहन्वः १। हन्यात्-प्रहण्यात् २। हन्तु-हतात् हताम् घ्नन्तु। शासाऽस् हन इति, जहि–हतात् हतम् हत। हनानि हनाव हनाम ३। अहन् अहताम् अघ्नन्। अहन् अहतम् अहत। अहनम् अहन्व अहन्म ४।

## अद्यतन्यां वा त्वात्मने ॥ ४१ ॥

अद्यतन्यां विषये हनो वधः स्यात्, आत्मनेपदे तु वा। इट ईतीति सिज्लोपे।

## अतः ॥ ४२ ॥

अदन्ताद्धातोर्विहितेऽशिति प्रत्यये धातोर्लुक् स्यात्, इत्यकारलुपि। अवधीत् अवधिष्टाम् अवधिषुः ५।

## ञि णवि घन् ॥ ४३ ॥

ञौ णवि च परे हन्तेर्घन् स्यात्। ततो द्वित्वे, द्वितीयतुर्ययोरिति घस्य गत्वे, गहोर्ज इति तस्य जत्वे, वृद्धौ च जघान। हनो द्वित्वे गमहनेत्युपान्त्यलुपि।

## अङे हिहनो हो घः पूर्वात् ॥ ४४ ॥

हिहनोर्ङवर्जे प्रत्यये परे द्वित्वे सति पूर्वस्मात्परस्य हो घः स्यात्। जघ्नतुः जघ्नुः। जघनिथ-जघन्थ जघ्नथुः जघ्न। जघान-जघन जघ्निव जघ्निम ६।

## हनो वध आशिष्यञौ ॥ ४५ ॥

आशीर्विषये हन्तेर्वधः स्यात्, न तु ञिटि। वध्यात् वध्यास्ताम् वध्यासुः ७। हन्ता ८। हृन्तः स्यस्येतीडागमे, हनिष्यति ९। अहनिष्यत् १०। वश ऱु कान्तौ। यजसृजेति षत्वे, तवर्गस्य श्चवर्गेति टत्वे, वष्टि।

## वशेरयङि ॥ ४६ ॥

वशेः सस्वरान्तस्था अयङि ङ्किति य्वृत्स्यात्।

उष्टः उशन्ति । वक्षि उष्ठः उष्ठ । वश्मि उश्वः उश्मः १। उश्यात् २। वष्टु उष्टात् उष्टाम् उशन्तु। उड्ढि-उष्टात् उष्टम् उष्ट। वशानि वशाव वशाम ३। अवट्-ड् य्वृति स्वरादेस्तास्विति वृद्धौ, औष्टाम् औशन् । अवट्-ड् औष्टम् । औश्व औश्म ४। व्यञ्जनादेर्वोपान्त्यस्यात इति वृद्धिविकल्पे, अवाशीत्-अवशीत् अवाशिष्टाम्-अवशिष्टाम् ५। द्वित्वे यजादि वश इति य्वृति, वृद्धौ उवाश । वशेरयङि इति य्वृति द्वित्वे च ऊशतुः ऊशुः। उवशिथ ऊशथुः ऊश । उवाश-उवश ऊशिव ऊशिम ६। उश्यात् उश्यास्ताम् ७। वशिता ८। वशिष्यति ९। अवशिष्यत् १०। असक् भुवि। अस्ति।

श्नाऽस्त्योर्लुक् ॥ ४७ ॥

श्नश्चास्तेश्चातः शित्यविति लुक् स्यात् । स्तः सन्ति ।

अस्तेः सिहस्त्वेति ॥ ४८ ॥

अस्तेः सस्य लुक् स्यात्सादौ प्रत्यये एति च सस्य हः स्यात्। असि स्थः स्थ। अस्मि स्वः स्मः १। स्यात् स्याताम् स्युः २। अस्तु-स्तात् स्ताम् सन्तु। शासस इति, एधि-स्तात् स्तम् स्त। असानि असाव असाम ३। सः सिजस्तेरितीदागमे एत्यस्तेरिति वृद्धौ च आसीत् आस्ताम् आसन्। आसीः आस्तम् आस्त। आसम् आस्व आस्म ४।

## अस्तिब्रुवोर्भूवचावशिति ॥ ४९ ॥

अस्तिब्रुवोर्यथासङ्ख्यं भूवचौ स्याताम् अशिति विषये । अभूत् ५ । बभूव ६ । इत्यादि प्राग्वत् ।

## प्रादुरुपसर्गाद्यस्वरेऽस्तेः ॥ ५० ॥

प्रादुःशब्दादुपसर्गस्थाच्च नाम्यन्तस्थाकवर्गात्परस्यास्तेः सकारस्य यादौ स्वरादौ च प्रत्यये षः स्यात् । प्रादुष्ष्यात् निष्यात् प्रादुष्षन्ति निषन्ति । शिङ्नान्तरेऽपि । निःषन्ति ।

इति परस्मैपदिनः ।

---

## अदादय आत्मनेपदिनः ।

इङ्क् अध्ययने । ङकार आत्मनेपदार्थः । अधिपूर्वश्चायम् । अधीते । धातोरिवर्णेतीयादेशे अधीयाते अधीयते । अधीषे १ । अधीयीत अधीयीयाताम् २ । अधीताम् अधीयाताम् ३ । अध्यैत इयादेशे वृद्धौ च अध्यैयाताम् अध्यैयत ४ ।

## वाद्यतनीक्रियातिपत्त्योर्गीङ् ॥ ५१ ॥

अनयोः परयोरिङो गीङ् वा स्यात् । अध्यगीष्ट अध्यगीषाताम् अध्यगीषत । अध्यैष्ट अध्यैषाताम् अध्यैषत ५ ।

## गाः परोक्षायाम् ॥ ५२ ॥

इङः परोक्षाविषये गाः स्यात् । अधिजगे ६ । अध्येषीष्ट ७ । अध्येता ८ । अध्येष्यते ९ । अध्यगीष्यत अध्यैष्यत १० । शीङ्क् स्वप्ने । (शीङ एः शिति*) शेते शयाते ।

## शीङोरत् ॥ ५३ ॥

शीङः परस्याऽऽत्मनेपदस्यस्याऽन्तोरत् स्यात् । शेरते १ । शयीत २ । शेताम् शयताम् शेरताम् ३ । अशेत ४ । अशयिष्ट ५ । शिश्ये ६ । शयिषीष्ट ७ । शयिता ८ । शयिष्यते ९ । अशयिष्यत १० । पूङौक् प्राणिगर्भविमोचने । सूते १ । धातोरिवर्णोवर्णस्येति उवादेशे सुवीत २ । सूताम् विच्छितोऽङित्त्वाद्गुणे प्राप्ते (सूतेः पञ्चम्यां गुणो न स्यात्*) सुवै ३ । असूत ४ । औदित्त्वादिड्विकल्पः । असविष्ट असविषाताम् असविषत । असोष्ट असोषाताम् असोषुः ५ । सुषुवे सुषुविषे ६ । सोषीष्ट सविषीष्ट ७ । सोता-सविता ८ । सोष्यते –सविष्यते ९ । असोष्यत-असविष्यत १० । इत्यादि । ईडिक् स्तुतौ । ईट्टे ईडाते ईडते ।

ऐड्ट [illegible] । ऐडिष्ट ५ । गुरुनाम्यादेरित्यामि ईडांचक्रे ६ । ईडिपीष्ट ७ । ईडिता ८ । ईडिष्यते ९ । ऐडिष्यत १० । ईरिक् गतिकम्पनयोः । ईर्त्ते १ । ईरीत २ । ईर्त्ताम् ईर्ध्वं ईर्ध्वम् ३ । ऐर्त्त [illegible] । ऐरिष्ट ५ । ईराञ्चक्रे ६ । ईरिपीष्ट ७ । ईरिता ८ । ईरिष्यते ९ । ऐरिष्यत १० । ईशिक् ऐश्वर्ये । ईष्टे ईशिषे ईशिध्वे १ । ईशीत २ । ईष्टाम् ३ । ऐष्ट ४ । ऐशिष्ट ५ । ईशांचक्रे ६ । ईशिपीष्ट ७ । ईशिता ८ । ईशिष्यते ९ । ऐशिष्यत १० । वसिक् आच्छादने । वस्ते १ । वसीत २ । वस्ताम् ३ । अवस्त ४ । अवसिष्ट ५ । ववसे ६ । वसिपीष्ट ७ । वसिता ८ । वसिष्यते ९ । अवसिष्यत १० । आङः शासूकि इच्छायाम् । आशास्ते १० । आङ्पूर्वत्वं प्रायिकं तेन प्रशास्महे इत्यपि सिद्धम् । आसिक् उपवेशने । आस्ते १ । आसीत २ । आस्ताम् ३ । आस्त ४ । आसिष्ट ५ । दयायास्कासः । आसांचक्रे ६ । आसिपीष्ट ७ । आसिता ८ । आसिष्यते ९ । आसिष्यत १० । णिसुकि चुम्बने । उदितः स्वरादिति नुमागमे, निंस्ते १० । चक्षिक् व्यक्तायां वाचि । संयोगस्येति कुलुपि, आचष्टे आचक्षाते आचक्षते । आचक्षे आचक्षाथे आचड्ढ्वे १ । आचक्षीत २ । आचष्टाम् ३ । आचष्ट आचक्षाताम् आचक्षत ४ ।

## चक्षो वाचि क्शांग्ख्यांग् ॥ ५५ ॥

चक्षो वागर्थस्याशिति विषये क्शांग्ख्यांगौ स्यातां, परोक्षायां नवा। अनुस्वार इड्निषेधार्थः। गकार उभयपदार्थः । आक्शासीत् आक्शासिष्टाम् आक्शासिषुः । जिघ्रतिवत् । आक्शास्त आक्शासाताम् आक्शासत। शास्त्यसूवक्तीत्यङि, आख्यत् आख्यन् ५। परोक्षायां द्वित्वे व्यञ्जनस्यानादेरिति लुपि, ह्रस्वे कङ्श्चञिति चत्वे आचक्शौ-आचक्शे। द्वितीयतुर्ययोरिति खस्य चत्वे च आचख्यौ-आचख्ये। पक्षे आचचक्षे। आक्शायात्-आक्शेयात् ६ । आक्शासीष्ट ७ । आक्शाता २। ८। आक्शास्यति-आक्शास्यते ९। आक्शास्यत् १०। आख्यायात्-आख्येयात् आख्यासीष्ट ७। आख्याता ८ । आख्यास्यति-आख्यास्यते ९। आख्यास्यत् १०।

इत्यदादिष्वात्मनेपदिनः।

---

अदादिषूभयपदिनः।

ऊर्णुग्क् आच्छादने।

## वोर्णोः ॥ ५६ ॥

ऊर्णोतिरद्व्युक्तस्य व्यञ्जनादौ वित्यौर्वा स्यात्। ऊर्णौति-ऊर्णोति ऊर्णुतः ऊर्णुवन्ति । ऊर्णौषि-ऊर्णोषि १। ऊर्णुयात् २। ऊर्णौतु-ऊर्णोतु ३।

## न द्विस्योः ॥ ५७ ॥

ऊर्णोतेर्द्विस्योः परयोरौर्न स्यात् । और्णोत्-द्
और्णुवन् और्णोः ४ ।

## वोर्णुगः सेटि ॥ ५८ ॥

ऊर्णोतेः सेटि सिचि परस्मैपदे वृद्धिर्वा स्यात् ।

## वोर्णोः ॥ ५९ ॥

ऊर्णोतेरिड् वा ङिद्वत्स्यात् । और्णावीत् और्णवीत्-और्णुवीत् और्णाविष्टाम् और्णविष्टाम्- और्णुविष्टाम् ५ ।

## स्वरादेर्द्वितीयः ॥ ६० ॥

स्वरादेर्धातोर्द्वितीयोंश एकस्वरो द्विः स्यात् ।

## अयि रः ॥ ६१ ॥

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य संयोगादिरो द्विर्न स्याचुरादनन्तरेऽयि । णत्वस्यासत्त्वान्नो द्विर्भावः । गुरुनाम्यादेरित्यत्रोर्णुवर्जनात्परोक्षाया आमभावः । ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवुः । ऊर्णुनविथ ऊर्णुनुविथ ६ । ऊर्णुयात् ७ । ऊर्णुविता-ऊर्णविता ८ । ऊर्णुविष्यति-ऊर्णविष्यति ९ । और्णुविष्यत्-और्णविष्यत् १० । ऊर्णुते ऊर्णुवाते ऊर्णुवते १ । और्णुविष्ट-और्णविष्ट ९ । ष्टुंगक् स्तुतौ । उत औविंतीत्यौत्वे, स्तौति । यङ्तुरुस्तो-

## चक्षो वाचि क्शांग्ख्यांग् ॥ ५५ ॥

चक्षो वागर्थस्याशिति विषये क्शांग्ख्यांगौ स्यातां, परोक्षायां नवा । अनुस्वार इड्निषेधार्थः । गकार उभयपदार्थः । आक्शासीत् आक्शासिष्टाम् आक्शासिषुः । जिघ्रतिवत् । आक्शास्त आक्शासाताम् आक्शासत । शास्त्यसूवक्तीत्यङि, आख्यत् आख्यन् ५ । परोक्षायां द्वित्वे व्यञ्जनस्यानादेरिति शलुपि, ह्स्वे कङ्श्चञिति चत्वे आचक्शौ-आचक्शे । द्वितीयतुर्ययोरिति खस्य चत्वे च आचख्यौ-आचख्ये । पक्षे आचचक्षे । आक्शायात्-आक्शेयात् ६ । आक्शासीष्ट ७ । आक्शाता २ । ८ । आक्शास्यति-आक्शास्यते ९ । आक्शास्यत् १० । आख्यायात्-आख्येयात् आख्यासीष्ट ७ । आख्याता ८ । आख्यास्यति-आख्यास्यते ९ । आख्यास्यत् १० ।

इत्यदादिष्वात्मनेपदिनः ।

---

### अदादिपूभयपदिनः ।

ऊर्णुगक् आच्छादने ।

### वोर्णोः ॥ ५६ ॥

ऊर्णोतेरद्युक्तस्य व्यञ्जनादौ वित्यैर्वा स्यात् । ऊर्णौति-ऊर्णोति ऊर्णुतः ऊर्णुवन्ति । ऊर्णौपि-ऊर्णोपि १ । ऊर्णुयात् २ । ऊर्णौतु-ऊर्णोतु ३ ।

## न दिस्योः ॥ ५७ ॥

ऊर्णोतेर्दिस्योः परयोरौर्न स्यात् । और्णोत्-द् और्णुवन् और्णोः ४ ।

## वोर्णुगः सेटि ॥ ५८ ॥

ऊर्णोतेः सेटि सिचि परस्मैपदे वृद्धिर्वा स्यात् ।

## वोर्णोः ॥ ५९ ॥

ऊर्णोतेरिड् वा ङिद्वत्स्यात् । और्णावीत् और्णवीत्-और्णुवीत् और्णाविष्टाम् और्णविष्टाम्- और्णुविष्टाम् ५ ।

## स्वरादेर्द्वितीयः ॥ ६० ॥

स्वरादेर्धातोर्द्वितीयोंश एकस्वरो द्विः स्यात् ।

## अयि रः ॥ ६१ ॥

स्वरादेर्धातोर्द्वितीयस्यांशस्यैकस्वरस्य संयोगादिरो द्विर्न स्याद्युरादनन्तरेऽयि । णत्वस्यासत्त्वान्नो द्विर्भावः । गुरुनाम्यादेरित्यत्रोर्णुवर्जनात्परोक्षाया आमभावः । ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवुः । ऊर्णुनविथ ऊर्णुनुविथ ६ । ऊर्णुयात् ७ । ऊर्णुविता-ऊर्णविता ८ । ऊर्णुविष्यति-ऊर्णविष्यति ९ । और्णुविष्यत्-और्णविष्यत् १० । ऊर्णुते ऊर्णुवाते ऊर्णुवते १ । और्णुविष्ट-और्णविष्ट ९ । ष्टुंगक् स्तुतौ । उत और्विति्यौत्वे, स्तौति । यङ्तुरुस्तो-

रितीदागमे, स्तवीति स्तुतः स्तुवन्ति १। स्तुयात् २। स्तौतु-स्तवीतु स्तुतात् ३। अस्तौत् अस्तवीत्।

## स्तुस्वञ्जश्चाटि नवा ॥ ६२ ॥

परिनिवेः परस्य स्तुस्वञ्जोरसोढसिवूसहस्सटां च सोऽटि सति षवा स्यात्। पर्यष्टौत्-पर्यस्तौत् एवं न्यष्टौत्, व्यष्टौत् ४। धुगूसुस्तोरितीटि, अस्तावीत् अस्ताविष्टाम् अस्ताविषुः ५। तुष्टाव। स्कसृत्रित्यादिसूत्रे स्तुवर्जनान्नेट्। तुष्टोथ तुष्टुवथुः तुष्टुव। तुष्टाव-तुष्टव तुष्टुव तुष्टुम ६। स्तूयात् ७। स्तोता ८। स्तोष्यति ९। अस्तोष्यत् १०। स्तुते १। स्तुवीत २। स्तुताम् ३। अस्तुत ४। अस्तोष्ट अस्तोड्ढ्वम् ५। तुष्टुवे तुष्टुढ्वे ६। स्तोषीष्ट ७। स्तोता ८। स्तोष्यते ९। अस्तोष्यत १०। ब्रूंग्क् व्यक्तायां वाचि।

## ब्रूतः परादिः ॥ ६३ ॥

ब्रुव उतः परो व्यञ्जनादौ विति परादिरीत् स्यात्। ब्रवीति ब्रूतः ब्रुवन्ति।

## ब्रूगः पञ्चानां पञ्चाहश्च ॥ ६४ ॥

ब्रूगः परेषां तिवादीनां पञ्चानां यथासङ्ख्यं पञ्च णवादयो वा स्युः तद्योगे ब्रूग आहश्च। आह आहतुः आहुः।

## नहाहोर्धतौ ॥ ६५ ॥

नहेर्ब्रूस्थानाहश्च धातोर्होंधुटि प्रत्यये पदान्ते च यथासङ्ख्यं धतौ स्याताम्। आत्थ आहथुः १। ब्रूयात् २। ब्रवीतु, अक्त्विात् ब्रवाणि ३। अब्रवीत् अब्रवम् ४। अस्तिब्रुवोरिति वचादेशे, श्वयत्यसूवच इति वोचादेशे च अवोचत् ५। उवाच ६। ब्रूते १। ब्रुवीत २। ब्रूताम् ब्रवै ३। अब्रूत ४। अवोचत ५। ऊचे ६। वक्षीष्ट ७। वक्ता ८। वक्ष्यते ९। अवक्ष्यत १०। द्विषीक् अप्रीतौ। द्वेष्टि १। द्विष्यात् २। द्वेष्टु द्विष्टात् द्विड्ढि द्वेषाणि ३। अद्वेट्। वा द्विषात इति पुसि, अद्विषुः— अद्विषन् ४। हशिटो नाम्युपान्त्यादिति सगागमे, अद्विक्षत् ५। दिद्वेष ६। द्विष्यात् ७। द्वेष्टा ८। द्वेक्ष्यति ९। अद्वेक्ष्यत् १०। द्विष्टे १। द्विषीत २। द्विष्टाम् द्वेषै ३। अद्विष्ट ४। अद्विक्षत ५। दिद्विषे ६। द्विक्षीष्ट ७। द्वेष्टा ८। द्वेक्ष्यते ९। अद्वेक्ष्यत १०। दुहींक् क्षरणे। भ्वादेर्दादेरिति हस्य घत्वे, अधश्चतुर्थादिति तस्य धत्वे, दोग्धि। गडदवादेरिति दस्य धत्वे, धोक्षि। थस्य धत्वे, दुग्धः दुग्ध। दोह्मि दुह्वः दुह्मः १। दुह्यात् २। दोग्धु। हेर्धित्वे, दुग्धि दोहानि ३। अधोक् अधोग् ४। अधुक्षत् ५। दुदोह ६। दुह्यात् ७। दोग्धा ८। धोक्ष्यति ९। अधोक्ष्यत् १०। दुग्धे १। दुहीत

२ । धुग्धाम् धुग्ध्वम् दोहे ३ । अदुग्ध ४ । दुह-लिहेति घा सक्लोपे, अदुग्ध अधुक्षत अदुह्वहि अधुक्षावहि ५ । दुदुहे ६ । धुक्षीष्ट ७ । दोग्धा ८ । धोक्ष्यते ९ । अधोक्ष्यत १० । एवं दिहींक् लेपे देग्धीत्यादि । लिहींक् आस्वादने । लेढि । हस्य ढत्वे, तस्य धत्वे, धस्य ढत्वे, ढस्तड्डे इति ढलोपे दीर्घे च लीढः लिहन्ति । लेक्षि लीढः १ । लि-

३ । अजुहोत् । श्नुक्तजक्षपञ्चत इत्यतः पुसि, अजुहवुः । अजुहोः अजुहवम् ४ । अहौषीत् अहौष्टाम् ५ ।

## भीह्रीभृहोस्तिव्वत् ॥ २ ॥

एभ्यश्चतुर्भ्यः परोक्षाया आम् वा स्यात्, स च तिव्वत् । जुहवाञ्चकार । पक्षे जुहाव जुहुवतुः जुहविथ-जुहोथ ६ । हूयात् ७ । होता ८ । होष्यति ९ । अहोष्यत् १० । ओहांक् त्यागे । जहाति ।

## हाकः ॥ ३ ॥

हाको व्यञ्जनादौ शित्यविति आत इर्वा स्यात् । जहितः । पक्षे ।

## एषामीर्व्यञ्जनेऽदः ॥ ४ ॥

एषामिति श्नुक्तानां जक्षपञ्चतः श्नश्चातः शित्यविति व्यञ्जनादावीः स्यात्, दासंज्ञं वर्जयित्वा । जहीतः । श्नश्चात इत्यालुकि, जहति । जहासि जहिथः-जहीथः जहिथ- जहीथ १ ।

## यि लुक् ॥ ५ ॥

यादौ शिति हाक आलुक् स्यात् । जह्यात् २ । जहातु जहितात्-जहीतात् जहतु ।

## आ च हौ ॥ ६ ॥

हाको हौ आ इश्च वा स्याताम् । जहाहि–जहिहि पक्षे जहीहि ३ । अजहात् अजहिताम्-अजहीताम् अजहुः ४ । अहासीत् ५ । जहौ जहतुः जहिथ-जहाथ ६ । गापास्थेत्येत्त्वे, हेयात् ७ । हाता ८ । हास्यति ९ । अहास्यत् १० । ञिभींक् भये । बिभेति १ ।

## भियो नवा ॥ ७ ॥

भियो व्यञ्जनादौ शित्यविति इर्वा स्यात् । बिभितः-बिभीतः बिभ्यति १ । बिभियात्-बिभीयात् २ । बिभेतु-बिभितात्-बिभीतात् ३ । अबिभेत् अबिभिताम्-अबिभीताम् अबिभयुः ४ । अभैषीत् ५ । भीह्रीत्यामि, बिभयाञ्चकार । पक्षे बिभाय बिभ्यतुः बिभयिथ बिभेथ ६ । भीयात् ७ । भेता ८ । भेष्यति ९ । अभेष्यत् १० । ह्रींक् लज्जायाम् । जिह्रेति जिह्रीतः । संयोगादितीयादेशे, जिह्रियति १। जिह्रीयात् २ । जिह्रेतु-जिह्रीतात् ३ । अजिह्रेत् अजिह्रीताम् अजिह्रयुः ४ । अह्रैषीत् ५ । जिह्रयाञ्चकार जिह्राय ६ । ह्रीयात् ७ । ह्रेता ८ । ह्रेष्यति ९ । अह्रेष्यत् १० । पॄंक् पालनपूरणयोः ।

## पॄभृमाहाङामिः ॥ ८ ॥

एषां पञ्चानां शिति द्वित्वे पूर्वस्य इः स्यात्तो गुणे, पिपर्ति पिपृतः पिप्रति १ । पिपृयात् २ ।

पिपर्तु-पिपृतात् ३ । अपिपः अपिपृताम् अपि-
परुः । अपिपः ४ । अपार्षीत् अपार्ष्टाम् ५ । पपार
पप्रतुः पप्रुः ६ । प्रियात् ७ । पर्ता ८ । ह्नृत
इतीडागमे, परिष्यति ९ । अपरिष्यत् १० । पृ इति
सेट् । दीर्घान्तोऽयमिति केचित्तत्र ।

## ओष्ठ्यादुर् ॥ ९ ॥

धातोरोष्ठ्यात्परस्य ऋतः क्ङित्युर् स्यात् । भ्वा-
देर्नामिन इति दीर्घे, पिपूर्तः पिपुरति १ । पिपूर्यात्
२ । पिपर्तु-पिपूर्तात् ३ । अपिपः ४ । अपारीत्
अपारिष्टाम् ५ । पपार ।

## ऋ शॄदॄप्रः ॥ १० ॥

एषां परोक्षायामृर्वा स्यात् । पप्रतुः पक्षे स्कृच्छृ-
तोऽकि परोक्षायामिति गुणे, पपरतुः पप्रुः-पपरुः ।
थवि स्कसृप्रितीटि, पपरिथ पपरिव ६ । पूर्यात् ७।
परिता-परीता ८ । परिष्यति परीष्यति ९ । अ-
परिष्यत्-अपरीष्यत् १० । ऋंक् गतौ । द्वित्वे
तु पृभृ इति पूर्वस्य इत्वे, पूर्वस्याऽस्वे स्वरे य्वो-
रियुवितीयादेशे, नामिन इति गुणे च इयर्त्ति
इयृतः इयूरति १ । इयृयात् २ । इयर्तु-इयृतात्
इयृहि-इयृतात् इयराणि ३ । ऐयः ऐयृताम् ऐयरुः।
ऐयरम् ऐयृव ४ ।

## सत्यर्तेर्वा ॥ ११ ॥

आभ्यामद्यतन्यामङ् वा स्यात् । स्वरादेरिति वृद्धौ, आरत् । पक्षे सिचि परस्मै इति वृद्धौ, आर्षीत् ५ । आर आरतुः । ऋवृव्येऽद इतीडागमे, आरिथ ६ । अर्यात् ७ । अर्ता ८ । अरिष्यति ९ । आरिष्यत् १० । षडेते परस्मैपदिनः । ओहाङ्क् गतौ । एषामीरितीत्वे, जिहीते । श्नश्चेत्यालुकि जिहाते जिहते जिहीषे १ । जिहीत २ । जिहीताम् ३ । अजिहीत अजिहत ४ । अहास्त ५ । जहे ६ । हासीष्ट ७ । हाता ८ । हास्यते ९ । अहास्यत १० । माङ्क् मानशब्दयोः । मिमीते मिमाते मिमते मिमीषे १ । मिमीत २ । मिमीताम् ३ । अमिमीत ४ । अमास्त ५ । ममे ६ । मासीष्ट ७ । माता ८ । मास्यते ९ । अमास्यत १० । द्वावात्मनेपदिनौ । डुदांग्क् दाने । दाधातुः शेषा इतः । द्वित्वे ह्रस्वे, ददाति । श्नश्चेत्यालुकि, दत्तः ददति । ददासि दत्थः दत्थ १ । दद्यात् २ । ददातु-दत्तात् ।

## हो दः ॥ १२ ॥

दासंज्ञस्य हौ परे एः स्यान्न च द्विः । देहि-दत्तात् ३ । अददात् अदत्ताम् अदतुः ४ । अदात् अदाताम् अदुः ५ । ददौ ददिथ-ददाथ ६ ।

देयात् ७ । दाता ८ । दास्यति ९ । अदास्यत् १० । दत्ते ददाते ददते । दत्से १ । ददीत २ । दत्ताम् ३ । अदत्त ४ । इश्च स्थाद इतीत्वे, अदित अदिपाताम् अदिषत ५ । ददे ६ । दासीष्ट ७ । दाता ८ । दास्यते ९ । अदास्यत १० । डुधांक् धारणे च । द्वितीयतुर्ययोरिति दत्वे, दधाति ।

## धागस्तथोश्च ॥ १३ ॥

चतुर्थान्तस्य धाग आदेश्चतुर्थः स्यात्तथोः स्ध्वोश्च परयोः । धत्तः दधति । दधासि धत्थः धत्थ १ । दध्यात् २ । दधातु-धत्तात् दधतु ३ । अदधात् ४ । अधात् ५ । दधौ ६ । धेयात् ७ । धाता ८ । धास्यति ९ । अधास्यत् १० । धत्ते दधाते दधते । धत्से दधाथे धध्वे १ । दधीत २ । धत्ताम् ३ । अधत्त ४ । अधित ५ । दधे ६ । धासीष्ट ७ । धाता ८ । धास्यते ९ । अधास्यत १० । डुभृंग्क् धारणपोषणयोः । पृभृ इतीत्वे, बिभर्ति बिभृतः बिभ्रति । बिभर्षि १ । बिभृयात् २ । बिभर्तु ३ । अबिभः अबिभरुः ४ । अभार्षीत् ५ । भीह्रीभृ इत्यामि, बिभरांबभूव । पक्षे बभार । स्क्रसृवृभृ इति सूत्रे भृवर्जनेनेड्निषेधात्, बभर्थ बभृव ६ । भ्रियात् ७ । भर्ता ८ । भरिष्यति ९ । अभरिष्यत् १० । बिभृते बिभ्राते १ । बिभ्रीत २ । बिभृताम् ३ । अबिभृत ४ । अभृत अभृषाताम्

५। विभराञ्चक्रे बभ्रे ६। भृषीष्ट ७। भर्ता ८। भरिष्यते ९। अभरिष्यत १०। णिजृंकी शौचे।

## निजां शित्येत् ॥ १४ ॥

निजिविजिविषां शिति द्वित्वे पूर्वस्य एत् स्यात्। नेनेक्ति नेनिक्तः नेनिजति। नेनेक्षि १। नेनिज्यात् २। नेनेक्तु-नेनिक्तात् नेनिग्धि।

## द्युक्तोपान्त्यस्य शिति स्वरे ॥ १५ ॥

द्विरुक्तस्य धातोरुपान्त्यस्य नामिनः शिति स्वरादौ गुणो न। नेनिजानि ३। अनेनेक्-ग् अनेनिजुः अनेनिजम् ४। ऋदिच्छ्वीत्यादिना वाङि, अनिजत् अनिजताम्। अनैक्षीत् अनैक्ताम् अनैक्षुः ५। निनेज ६। निज्यात् ७। नेक्ता ८। नेक्ष्यति ९। अनेक्ष्यत् १०। नेनिक्ते १। नेनिजीत २। नेनिक्ताम् ३। अनेनिक्त ४। अनिक्त अनिक्षाताम् ५। निनिजे ६। निक्षीष्ट ७। नेक्ता ८। नेक्ष्यते ९। अनेक्ष्यत १०। विजृंकी पृथग्भावे। वेवेक्ति १० इत्यादि निजिवत्। विषृंकी व्याप्तौ। वेवेष्टि वेविष्टः १। वेविष्यात् २। वेवेष्टु-वेविष्टात् ३। अवेवेट्-ड् ४। लृदित्यादङ् अविषत् ५। विवेष ६। विष्यात् ७। वेष्टा ८। वेक्ष्यति ९। अवेक्ष्यत् १०। वेविष्टे १। वेविषीत २। वेविष्टाम् ३। अवेविष्ट ४। हशिट इति सकि,

अविक्षत ५। विविषे ६ । विक्षीष्ट ७। वेष्टा ८। वेक्ष्यते ९। अवेक्ष्यत १०। एते षडुभयपदिनः।

इति श्रीमहोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय-गणिविरचितायां हैमलघुप्रक्रियायां जुहोत्यादयः समाप्ताः।

---

## अथ दिवादयः।

दिवूच् क्रीडाजयेच्छापणद्युतिस्तुतिगतिषु।

### दिवादेः श्यः ॥ १ ॥

कर्तरि शिति दिवादेः श्यः स्यात्। शकार इत्। भ्वादेर्नामिन इति दीर्घे, दीव्यति १। दीव्येत् २। दीव्यतु ३। अदीव्यत् ४। अदेवीत् ५। दिदेव दिदिवतुः दिदेविथ ६। दीव्यात् ७। देविता ८। देविष्यति ९। अदेविष्यत् १०। जॄष् झॄष् च जरसि। ॠतां क्ङितीर्, जीर्यति ४। ॠदिच्छ्वीत्यङ् वा। अजरत् अजारीत् ५। जजार। स्कृच्छृतोऽकीति गुणे, जॄभ्रमेति वा एत्वे, जेरतुः-जजरतुः ६। जीर्यात् ७। जरिता- जरीता ८। जरिष्यति-जरीष्यति ९। शोंच् तक्षणे।

### ओतः श्ये ॥ २ ॥

धातोरोतः श्ये लुक्। श्यति १। श्येत् २। श्यतु ३। अश्यत् ४। आ सन्ध्यक्षरस्येत्यात्वे,

धे घ्राशेति वा सिज्लुपि—अशात्, अशासीत् ५। शशौ ६। शायात् ७। शाता ८। एवं दों छोंच् छेदने। षोंच् अन्तकर्मणि। द्यतीत्यादि। नृतैच् नर्तने। नृत्यति ४। ननर्त ६। नृत्यात् ७। नर्तिता ८।

कृतचृतनृतच्छृदतृदोऽसिचः सादेर्वा ॥ ३ ॥

एभ्यः पञ्चभ्यः परस्याऽसिचः सादेरशित आदिरिड् वा स्यात्। नर्तिष्यति-नर्त्स्यति ९। कुथच् पूतीभावे। कुथ्यति ४। अकोथीत् ५। चुकोथ ६। कोथिता ७। व्यधंच् ताडने।

ज्याव्यधः क्ङिति ॥ ४ ॥

अनयोः सस्वरान्तस्था क्ङिति परे य्वृत्स्यात्। विध्यति ४। अव्यात्सीत् अव्याद्धाम् अव्यात्सुः ५। ज्याव्येव्यधीति पूर्वस्य इत्वे, विव्याध। य्वृति ङित्ये च विविधतुः विव्यधिथ विव्यद्ध ६। विध्यात् ७। व्यद्धा ८। व्यत्स्यति ९। अव्यत्स्यत् १०। षिवूच् उतौ। सीव्यति ४। असेवीत् ५। सिषेव ६। ष्ठिवू क्षिवू च निरसने। निष्ठीव्यति तिष्ठेव-टिष्ठेव। त्रसैच् भये। भ्राशभ्लाशेति वा श्ये त्रस्यति-त्रसति ४। अत्रासीत्-अत्रसीत् ५। तत्रास। जृभ्रमेति वा एत्वे, त्रेसतुः-तत्रसतुः ६। पुषंच् पुष्टौ।

पुष्यति ४ । लृदिद्द्युतादिपुष्यादेरित्यङि, अपुपत् ५ । पुपोष ६ । पुष्यात् ७ । पोष्टा ८ । पोक्ष्यति ९ । शुषंच् शोषणे । दुषंच् वैकृत्ये । ञितृषंच् पिपासायाम् । तुषं हृषंच् तुष्टौ । रुषंच् रोषे इत्यादि पुष्यादयः सप्तषष्टिः । क्लिदौच् आर्द्रभावे । क्लिद्यति १० । ञिमिदांच् स्नेहने ।

## मिदः श्ये ॥ ५ ॥

मिदेरुपान्त्यस्य श्ये गुणः स्यात् । मेद्यति ४ । अमिदत् ५ । क्षुधंच् बुभुक्षायाम् । क्षुध्यति १० । शुधंच शौचे । शुद्ध्यति १० । क्रुधंच् कोपे । क्रुध्यति १० । तृपौच् प्रीतौ । तृप्यति ४ । स्पृशमृशेति सिज्विकल्पे, स्पृशादिसृपो वेत्यद्विकल्पे त्रप् इति जाते वृद्धौ च अत्राप्सीत् । पक्षे अताप्सीत् । पक्षे औदित्वादिटि, अतर्पीत् । पक्षेऽङि अतृपत् ५ । ततर्प ६ । तृप्यात् ७ । त्रप्ता-तर्प्ता-तर्पिता ८ । त्रप्स्यति-तर्प्स्यति-तर्पिष्यति ९ । दृपौच् हर्षमोहनयोः । दृप्यति १० । लुभच् गार्ध्ये । लुभ्यति १० । क्षुभच् संचलने । क्षुभ्यति १० । नशौच् अदर्शने ।

## नशः शः ॥ ६ ॥

अदुरुपसर्गान्तस्थाद्रादेः परस्य शान्तस्य नशेर्णत्वं स्यात् । प्रणश्यति । शान्तस्येति किम् । प्रनष्ट इत्यादौ शस्य षत्वे न भवति ।

## नशेर्नेश्वाऽङि ॥ ७ ॥

नशेरङि नेश् वा स्यात् । अनेशत्-अनशत् ५। ननाश ६ । नश्यात् ७ ।

## नशो धुटि ॥ ८ ॥

नशः स्वरात्परो नोन्तः स्यात् धुडादौ । नंष्टा । पक्षे इटि नशिता ८ । नंक्ष्यति-नशिष्यति ९ । श्लिषंच् आलिङ्गने । श्लिष्यति ४ ।

## श्लिषः ॥ ९ ॥

श्लिषोऽनिटोऽनद्यतन्यां सक् स्यात् न त्वजीवाश्लेषे । आश्लिक्षत् ४ । अजीवाश्लेषे तु आश्लिष्यजतु काष्ठम् ५ । शिश्लेष ६ । श्लिष्यात् ७ । श्लेष्टा ८ । असूच् क्षेपणे । अस्यति ४ । शास्त्यसू इत्यङि, श्वयत्यसू इत्यास्थादेशे, आस्थत् ५ । आस ६ । अस्यात् ७ । असिता ८ । शमू दमू च उपशमे २ । तमूच् काङ्क्षायाम् ३ । श्रमूच् खेदतपसोः ४ । भ्रमूच् अनवस्थाने ५ । क्षमौच् सहने ६ । मदैच् हर्षे ७ । इति शमसप्तकम् ।

## शमसप्तकस्य ॥ १० ॥

श्ये दीर्घः स्यात् । शाम्यति ४ । अशमत् ५ । शमिता ७ । क्षाम्यति । औदित्त्वात् क्षमिता-क्षन्ता । क्षमिष्यति-क्षंस्यति । मुहौच् वैचित्ये । मुह्यति । इड्विकल्पे मुहद्रुहस्नुहस्निहो वेति घत्व-

ढत्वाभ्यां च मोढा-मोग्धा-मोहिता । मोक्ष्यति-मोहिष्यति । द्रुहौच् जिघांसायाम् । ध्रोक्ष्यति-द्रोहिष्यति । ष्णिहौच् प्रीतौ । स्नेग्धा स्नेढा-स्नेहिता ।

इति परस्मैपदिनः ।

पदिंच् गतौ । पद्यते ४ ।

## ञिच्तेपदस्तलुक् च ॥ ११ ॥

पद्यतेरद्यतन्यास्ते परे ञिच् स्यात्तलुक् च । अपादि अपत्साताम् अपत्सत ५ । पेदे ६ । पत्सीष्ट ७ । पत्ता ८ । पत्स्यते ९ । अपत्स्यत १० । युधिंच् सम्प्रहारे । युध्यते ४ । सिजाशिषोरत्र किस्वात् । अयुद्ध ५ । युयुधे ६ । युत्सीष्ट ७ । योद्धा ८ । योत्स्यते ९ । वुधिं मनिंच् ज्ञाने । बुध्यते । अवुद्ध ४ । अवोधि ५ । वुवुधे ६ । भुत्सीष्ट ७ । वोद्धा ८ । भोत्स्यते ९ । जनैचि प्रादुर्भावे ।

## जा ज्ञाजनोऽत्यादौ ॥ १२ ॥

ज्ञाजनोः शिति जा स्यात्त्वनन्तरेऽत्यादौ । जायते ४ ।

## ञिचि न जनवधः ॥ १३ ॥

अनयोः कृति ञिणति ञौ च वृद्धिर्न स्यात् । अजनि अजनिष्ट ५ । गमहनजनेत्युपान्त्यलुकि, जज्ञे ६ । जनिषीष्ट ७ । दीपैचि दीप्तौ । दीप्यते

४ । दीपजनबुधीति ञिज्विकल्पे, अदीपि अदीपिष्ट ५ । दिदीपे ६ । दीपिषीष्ट ७ ।

इत्यात्मनेपदिन ।

णहींच् बन्धने । नह्यति ४ । नहाहोर्धतौ । अनात्सीत् ५ । ननाह ६ । नह्यात् ७ । नद्धा ८ । नत्स्यति ९ । नह्यते ४ । अनद्ध । अनत्साताम् ५ । नेहे ६ । नत्सीष्ट । नत्स्यते ९ ।

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनय विजयगणिविरचितायां हैमलघुप्रक्रियायां दिवादयः समाप्ताः ।

---

## अथ स्वादयः ।

पुंगृट् अभिषवे ।

### स्वादेः श्नुः ॥ १ ॥

स्वादेः कर्तृविहिते शिति श्नुः स्यात् । उश्नोरिति गुणे, सुनोति सुनुतः सुन्वन्ति ।

### वम्यविति वा ॥ २ ॥

असंयोगात्परस्य प्रत्ययस्य उतो लुग् वा स्यात् अविति वादौ मादौ च परे । सुन्वः-सुनुवः सुन्मः-सुनुमः १ । सुनुयात् २ । सुनोतु-सुनुतात् । असंयोगादेरिति हेर्लुक्, सुनु-सुनुतात् सुनवानि ३ । असुनोत् ४ । धूगसुस्तोरितीटि, असावीत् ५ ।

सुषाव ६ । सूयात् ७ । सोता ८ । सोष्यति ९ । सुनुते सुन्वाते सुन्वते । सुन्वहे-सुनुवहे १ । सुन्वीत २ । सुनुताम् सुनवै ३ । असुनुत ४ । असोष्ट ५ । सुषुवे ६ । सोषीष्ट ७ । सोता ८ । सोष्यते ९ । असोष्यत १० ।

## उपसर्गात्सुगसुवसोस्तुस्तुभोऽट्यप्यद्वित्वे ॥ ३ ॥

अद्वित्वे सति सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनां सकारस्योपसर्गस्थान्नाम्यादेः परस्य सस्य षः स्यात् अट्यपि । अभिषुणोति । शिड्नान्तरेऽपि, निःषुणोति । अट्यपि, अभ्यषुणोत् । चिंगट् चयने । चिनोति ४ । अचैषीत् ५ ।

## चेः किर्वा ॥ ४ ॥

सन्परोक्षयोर्द्वित्वे सति पूर्वात्परस्य चेः किर्वा स्यात् । चिकाय-चिचाय चिक्यतुः चिच्यतुः ६ । चीयात् ७ । चेता ८ । चिनुते ४ । अचेष्ट अचेढ्वम् ५ । चिक्ये-चिच्ये चिच्याते ६ । चेषीष्ट चेषीढ्वम् ७ । धूगट् कम्पने । धूनोति ४ । धूग्सुस्तोः, अधावीत् ५ । दुधाव ६ । धूनुते ४ । धूगौदित इतीड्विकल्पे, अधोष्ट-अधविष्ट ५ । दुधुवे ६ । धोषीष्ट–धविषीष्ट ७ । धोता-धविता ८ । धोष्यते-धविष्यते ९ । स्तृंगट् आच्छादने । स्तृ-

णोति ४। अस्तार्षीत् ५। संयोगादृदर्त्तेरिति गुणे, तस्तरतुः तस्तर्थ ६। स्तर्यात् ७। स्तर्ता ८। स्तरिष्यति ९। स्तृणुते ४।

## संयोगादृतः ॥ ५ ॥

संयोगात्परो य ऋस्ततः परयोरात्मनेपदे सिजाशिषोरादिरिड्वा स्यात् । अस्तरिष्ट अस्तृत ५। तस्तरे ६ । स्तरिषीष्ट ७। वृग्ट् वरणे। वृणोति ४।अवारीत् ५। ववार ववरिथ ववृव ६। व्रियात् ७। वृतो नवेति वा दीर्घे, वरिता-वरीता ८। वरिष्यति-वरीष्यति ९। वृणुते ४।

## इड्सिजाशिषोरात्मने ॥ ६ ॥

वृभ्यामृदन्तेभ्यश्च परयोरात्मनेपदे सिजाशिषोरादिरिड्वा स्यात्। अवरिष्ट-अवरीष्ट अवृत ५। वव्रे ६। वृषीष्ट-वरिषीष्ट ७।

इत्युभयपदिनः।

हिंट् गतिवृद्ध्योः । हिनोति ४। अदुरुपसर्गेति णत्वे, प्रहिणोति। अहैषीत् ५। अङेहिंद्दनो होघ इति, जिघाय ६। हीयात् ७। हेता ८। हेष्यति ९ । श्रुंट् श्रवणे। श्रौतीत्यादिना, श्रृणोति ४। अश्रौषीत् ५। शुश्राव शुश्रोथ ६। शक्लृंट् शक्तौ। शक्नोति शक्नुतः। श्नुश्रोरित्युवादेशे, शक्नुवन्ति। संयोगादेर्धश्च लोपाभावः । शक्नुवः। शक्नुहि ४।

लृदित्वादङ्, अशकत् ५। शशाक ६। एवं आप्लूंट् व्याप्तौ। आप्नोति।

इति परस्मैपदिनः।

अशौटि व्याप्तौ। अश्नुते। अश्नुवीत ४। आशिष्ट-आष्ट ५। ऋदाद्यशाविति नुगि, आनशे ६। अशिषीष्ट-अक्षीष्ट ७। अशिता-अष्टा ८। अशिष्यति-अक्ष्यति ९। आशिष्यत्-आक्ष्यत् १०।

इत्यात्मनेपदिनः।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां स्वादयो धातवः पूर्णाः।

---

## अथ तुदादयः।

तुदींत् व्यथने।

### तुदादेः शः ॥ १ ॥

एभ्यः कर्तृविहिते शिति शः स्यात्। तुदति १। तुदेत् २। तुदतु ३। अतुदत् ४। अतौत्सीत् ५। तुतोद ६। तुद्यात् तुद्यास्ताम् ७। तोत्ता तोत्तारौ ८। तोत्स्यति ९। अतोत्स्यत् १०। तुदते १। तुदेत २। तुदताम् ३। अतुदत ४। अतुत्त अतुत्साताम् ५। तुतुदे ६। तुत्सीष्ट ७। भ्रस्जींत् पाके।

## ग्रहव्रश्चभ्रस्जप्रच्छः ॥ २ ॥

एषा सस्वरान्तस्था क्ङिति य्वृत्स्यात् । सस्य शषौ इति सस्य शत्वे, तृतीयस्तृतीयश्चतुर्थे इति शस्य जत्वे, भृज्जति ४ ।

## भृज्जो भर्जः ॥ ३ ॥

भृज्जतेरशिति भर्ज् वा स्यात् । अभार्क्षीत् । संयोगस्यादाविति स्लुकि, अभ्राक्षीत् ५ । बभर्ज-बभ्रज्ज बभर्जतुः-बभ्रज्जतुः । संयोगात्परोक्षायाः किस्त्वाभावः । बभर्जिथ-बभर्ष्ठ-बभ्रज्जिथ-बभ्रष्ठ ६ । भृज्ज्यात् ७ । भर्ष्टा-भ्रष्टा ८ । भर्क्ष्यति-भ्रक्ष्यति ९ । भृज्जते ४ । अभर्ष्ट-अभ्रष्ट ५ । बभर्जे-बभ्रज्जे ६ । भर्क्षीष्ट-भ्रक्षीष्ट ७ । क्षिपीत् प्रेरणे । क्षिपति ४ । अक्षैप्सीत् ५ । क्षेप्ता ८ । क्षेप्स्यति ९ । क्षिपते ४ । अक्षिप्त ५ । प्रत्यभ्यतेः क्षिपः परस्मैपदमेव । दिशींत् अतिसर्जने दाने इत्यर्थः । दिशति ४ । अदिक्षत् ५ । देष्टा ७ । दिशते ४ । अदिक्षत ५ । दिक्षीष्ट ७ । कृषींत् विलेखने । कृषति कृषते ४ । स्पृशमृशेति वा सिजि, स्पृशादि सृपो वेत्यादागमे, अक्राक्षीत्-अकार्क्षीत्-अकृक्षत् ५ । क्रष्टा-कर्ष्टा ८ । अकृष्ट ५ । कृक्षीष्ट ८ । क्रक्ष्यते-कर्क्ष्यते ९ । मुच्लृंती मोक्षणे १ । षिचींत् क्षरणे २ । विदॢंती लाभे ३ । लुप्लृंती छेदने ४ । लिपींत् उपदेहे ५ । कृतैत्

छेदने ६ । खिदंत् परिघाते ७ । पिशत् अवयवे ८ । इत्यष्टौ मुचादयो ज्ञेयाः ।

## मुचादितृफदृफगुफशुभोम्भः शेः ॥ ४ ॥

एषां शे परे स्वरान्नोऽन्तः स्यात् । मुञ्चति १ । अमुञ्चत् ४ । लृदित्वादङ्, अमुचत् ५ । मोक्ता ८ । मुञ्चते ४ । अमुक्त ५ । सिञ्चति । ह्वालिप्सिच इत्यङि, असिचत् ५ । सिञ्चते ४ । वात्मने, असिचत- असिक्त ५ । विन्दति ४ । अविदत् ५ । वेत्ता ८ । अवित्त १० । वेत्स्यते ९ । लुम्पति ४ । अलुपत् ५ । लुम्पते ४ । अलुप्त ५ । लिम्पति ४ । अलिपत् ५ । अलिपत- अलिप्त ५ ।

इत्युभयपदिन ।

कृतैत् छेदने । मुचादित्वान्नोऽन्ते, कृन्तति ४ । अकर्तीत् ५ । चकर्त ६ । कृत्यात् ७ । कर्तिता ८ । कर्तिष्यति ९ । अकर्तिष्यत् १० । मृंत् प्राणत्यागे ।

## म्रियतेरद्यतन्याशिषि च ॥ ५ ॥

अद्यतन्याशिषि च म्रियतेरात्मनेपदं स्यात् । अद्यतन्यामाशिषि शिद्विषये च । नान्यत्र ऋतोरिः, इति रित्वे, इयादेशे, म्रियते ४ । अमृत ५ । ममार ६ । मृषीष्ट मृषीयास्ताम् ७ । मर्ता मर्तारौ ८ । मरिष्यति ९ । अमरिष्यत् १० । कृत् विक्षेपे । गृत् निगरणे । ऋतां क्ङितीर्, गिरति ।

## ग्रहव्रश्चभ्रस्जप्रच्छः ॥ २ ॥

एषां सस्वरान्तस्था क्ङिति य्वृत्स्यात् । सस्य शषौ इति सस्य शत्वे, तृतीयस्तृतीयचतुर्थे इति शस्य जत्वे, भृज्जति ४ ।

## भृज्जो भर्जः ॥ ३ ॥

भृज्जतेरशिति भर्ज् वा स्यात् । अभार्क्षीत् । संयोगस्यादाविति स्लुकि, अभ्राक्षीत् ५ । बभर्ज-बभ्रज्ज बभर्जतुः-बभ्रज्जतुः । संयोगात्परोक्षायाः कित्त्वाभावः । बभर्जिथ-बभर्ष्ठ-बभ्रज्जिथ-बभ्रष्ठ ६ । भृज्ज्यात् ७ । भर्ष्टा-भ्रष्टा ८ । भर्क्ष्यति-भ्रक्ष्यति ९ । भृज्जते ४ । अभर्ष्ट-अभ्रष्ट ५ । बभर्जे-बभ्रज्जे ६ । भर्क्षीष्ट-भ्रक्षीष्ट ७ । क्षिपीं प्रेरणे । क्षिपति ४ । अक्षैप्सीत् ५ । क्षेप्ता ८ । क्षेप्स्यति ९ । क्षिपते ४ । अक्षिप्त ५ । प्रत्यभ्यतेः क्षिपः परस्मैपदमेव । दिशीं अतिसर्जने दाने इत्यर्थः । दिशति ४ । अदिक्षत् ५ । देष्टा ७ । दिशते ४ । अदिक्षत ५ । दिक्षीष्ट ७ । कृषीं विलेखने । कृषति कृषते ४ । स्पृशमृशेति वा सिजि, स्पृशादि सृपो वेत्यादागमे, अम्राक्षीत्-अकार्क्षीत्-अकृक्षत् ५ । क्रष्टा-कर्ष्टा ८ । अकृष्ट ५ । कृक्षीष्ट ८ । क्रक्ष्यते-कर्क्ष्यते ९ । मुच्लृंती मोक्षणे १ । षिचींत् क्षरणे २ । विद्लृंती लाभे ३ । लुप्लृंती छेदने ४ । लिपींत् उपदेहे ५ । कृतैत्

छेदने ६ । खिदंत् परिघाते ७ । पिशत् अवयवे ८ । इत्यष्टौ मुचादयो ज्ञेयाः ।

## मुचादितृफदृफगुफशुभोम्भः शे: ॥४॥

एषां शे परे स्वरान्नोऽन्तः स्यात् । मुञ्चति १ । अमुञ्चत् ४ । लृदित्वादङ्, अमुचत् ५ । मोक्ता ८ । मुञ्चते ४ । अमुक्त ५ । सिञ्चति । ह्वालिप्सिच इत्यङि, असिचत् ५ । सिञ्चते ४ । वात्मने, असिचत-असिक्त ५ । विन्दति ४ । अविदत् ५ । वेत्ता ८ । अवित्त १० । वेत्स्यते ९ । लुम्पति ४ । अलुपत् ५ । लुम्पते ४ । अलुप्त ५ । लिम्पति ४ । अलिपत् ५ । अलिपत- अलिप्त ५ ।

इत्युभयपदिन ।

कृतैत् छेदने । मुचादित्वान्नोऽन्ते, कृन्तति ४ । अकर्तीत् ५ । चकर्त ६ । कृत्यात् ७ । कर्तिता ८ । कर्तिष्यति ९ । अकर्तिष्यत् १० । मृंत् प्राणत्यागे ।

## म्रियतेरद्यतन्याशिषि च ॥ ५ ॥

अद्यतन्याशिषि च म्रियतेरात्मनेपदं स्यात् । अद्यतन्यामाशिषि शिद्विषये च । नान्यत्र ऋतोरिः, इति रित्वे, इयादेशे, म्रियते ४ । अमृत ५ । ममार ६ । मृषीष्ट मृषीयास्ताम् ७ । मर्ता मर्तारौ ८ । मरिष्यति ९ । अमरिष्यत् १० । कृत् विक्षेपे । गृत् निगरणे । ऋतां क्ङितीर्, गिरति ।

## नवा स्वरे ॥ ६ ॥

गिरते रस्य लो वा स्यात् स्वरे परे । गिलति ४ । अगारीत् ५ । जगार ६ । गीर्यात् ७ । गरिता-गरीता ८ । ( अवात् गिर आत्मनेपदम्* ) अवगिरते ( संपूर्वात्प्रतिज्ञार्थाद्वा स्याद्* ) वादं संगिरते संगिरति । ओव्रश्चौत् छेदने । वृश्चति ४ । वेट्त्वात् अव्रश्चीत् । सकारापदिष्टं शकारस्यापि, अव्राक्षीत् ५ । वव्रश्च वव्रश्चिथ वव्रष्ठ ६ । वृश्च्यात् ७ । व्रष्टाव्रश्चिता ८ । प्रच्छंत् ज्ञीप्सायाम् । ग्रहव्रश्चेति य्वृत्, पृच्छति ४ ।

## अनुनासिके च छ्वः शूट् ॥ ७ ॥

अनुनासिकादौ क्वौ धुडादौ च प्रत्यये धातोः छ्वोः शूटौ स्याताम् । अप्राक्षीत् ५ । पप्रच्छ ६ । पृच्छ्यात् ७ । प्रष्टा ८ । प्रक्ष्यति ९ । ( आङ्पूर्वात्पृच्छतेरात्मनेपदम्* ) आपृच्छते । सृजंत् विसर्गे । सृजति ४ । अः सृजिदृशोऽकिति अस्राक्षीत् ५ । ससर्ज । सृजिदृशीति वेटि सस्रष्ठ—ससर्जिथ ६ । सृज्यात् ७ । स्रष्टा ८ । टुमस्जोंत् शुद्धौ । मज्जति ४ ।

## मस्जेः सः ॥ ८ ॥

मस्जेः स्वरात्परस्य सस्य स्थाने धुटि परे नोऽन्तः स्यात् । अमाङ्क्षीत् अमाङ्क्ताम् ५ । ममज्ज ममज्जिथ-ममङ्क्थ ६ । मज्ज्यात् ७ । मङ्क्ता ८ । मङ्-

क्ष्यति ९ । णुदन्त् प्रेरणे । नुदति १० । पाणिनीयास्त्वेनमुभयपदिनं पठन्ति । नुनुदे । स्पृशंत् संस्पर्शे । स्पृशति ४ । अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत् ५ । स्प्रष्टा-स्पर्ष्टा ८ । स्प्रक्ष्यति-स्पर्क्ष्यति ९ । विशंत् प्रवेशने । अविक्षत् ५ । वेष्टा ८ । वेक्ष्यति ९ । निपूर्वाद्विश आत्मनेपदं भवति । निविशते । एवं मृशंत् आमर्शने । इषत् इच्छायाम् । गमिषद्यमश्छः । इच्छति ४ । ऐषीत् ऐषिष्टाम् ५ । इयेष ६ ।

इति परस्मैपदिनः ।

ओविजैति भयचलनयोः । प्रायोऽयमुत्पूर्वः । उद्विजते ४ । (विजेरिट्ङिद्वत्स्यात् *) उद्विजिता ८ । ओलस्जैति व्रीडे । लज्जते ४ । अलज्जिष्ट ५ । ललज्जे ६ । लज्जिषीष्ट ७ । जुषैति प्रीतिसेवनयोः । जुषते १० । इत्यात्मनेपदिनः ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां तुदादयः समाप्ताः ।

---

## अथ रुधादयः ।

रुधूंपी आवरणे ।

रुधां स्वराच्छ्नो नलुक् च ॥ १ ॥

रुधादीनां स्वरात्परः कर्त्रर्थे शिति श्नः स्यात्तद्योगे प्रकृतेर्नलुक् च । रुणद्धि । अवितिशिति

श्नास्त्योर्लुगित्यकारलुकि, रुन्द्धः रुन्धन्ति। रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः १। रुन्ध्यात् २। रुणद्धु रुन्द्धि-रुन्द्धात् रुणधानि ३। अरुणत् २ अरुन्धन् ४। ऋदित्त्वाद्वाडि, अरुधत्-अरौत्सीत् ५। रुरोध ६। रुन्ध्यात् ७। रोद्धा ८। रोत्स्यति ९। अरोत्स्यत् १०। रुन्द्धे रुन्धते १। रुन्धीत २। रुन्द्धां रुणधै ३। अरुन्द्ध ४। अरुद्ध ५। रुरुधे ६। रुत्सीष्ट ७। युजूंपी योगे। युनक्ति युङ्क्तः १ अयुनक् २। ४। अयुजत् अयौक्षीत् ५। युयोज ५। योक्ता ८। युङ्क्ते ४। अयुक्त ५। युयुजे ६। युक्षीष्ट ७। योक्ता ८। भिदूंपी विदारणे। भिनत्ति भिन्तः ४। अभिदत् अभैत्सीत् ५। भिन्ते ४। अभित्त ५। छिदूंपी द्वैधीकरणे।

इत्युभयपदिनः।

भञ्जोप् आमर्दने। भनक्ति भङ्क्तः १। अभनक् २। अभनजम् ४। अभाङ्क्षीत् ५। बभञ्ज ६। भज्यात् ७। भङ्क्ता ८। भङ्क्ष्यति ९। भुजंप् पालनाभ्यवहारयोः। भुनक्ति १। दिवि अभुनज् ४। अभौक्षीत् ५। बुभोज ६। भुज्यात् ७।

भुनजोऽत्राणे ॥ २॥

पालनादन्यार्थाद् भुनक्तेः कर्तर्यात्मनेपदं स्यात्। भुङ्क्ते ४। अभुक्त ५। बुभुजे ६। भुक्षीष्ट ७। अञ्जौप्

व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति अङ्क्तः १ । अज्यात् २। अनक्तु अङ्ग्धि-अङ्क्तात् ३। आनक् २ ।४।

## सिचोऽञ्जेः ॥ ३ ॥

अञ्जेः सिच आदिरिट् स्यात् । आञ्जीत् ५ । आनञ्ज ६ । अज्यात् ७ । औदित्त्वात् अङ्क्ता-अञ्जिता ८ । शिप्लृंप विशेषणे । शिनष्टि शिष्टः शिंषन्ति १। शिंष्यात् २ । शिनष्टु। शिन् षहि इति स्थिते । हेर्धिः, धुटस्तृतीयेति षस्य डः, तवर्गश्चवर्गेति धेर्ढिः । म्ना धुड्वर्गे इति नस्य णः ।

## धुटो धुटि स्वे वा ॥ ४ ॥

व्यञ्जनात्परस्य धुटो धुटि स्वे परे लुग्वा स्यात् । इति डलोपे, शिण्ढि शिनषाणि ३। अशिनट्-ड् ४। अशिषत् ५ । शिशेष ६ । शिष्यात् ७। शेष्टा ८ । शेक्ष्यति ९ । हिसु तृहप् हिंसायाम् । उदितः स्वरादिति नागमे, तल्लोपे च, हिनस्ति हिंस्तः हिंसन्ति १। हिंस्यात् २ । हिनस्तु हिन्धि ३ । व्यञ्जनादेः सश्च दः । अहिनद्-त् ४ । अहिंसीत् ५ । जिहिंस ६। हिंस्यात् ७ । हिंसिता ८ ।

## तृहः श्नादीत् ॥ ५ ॥

तृहः श्नात्पर ईत् स्याद्व्यञ्जनादौ विति । तृणेढि तृण्ढः । शिड्हेऽनुस्वार इति तृंहन्ति । तृणेक्षि तृणेह्मि १ । तृंह्यात् २ । तृणेढु । ह्रौ तृण्ढि तृण-

हानि ३। अतृणेट् अतृण्ढाम् अतृंहन् ४। अतर्हीत् ५। ततर्ह ६। तृह्यात् ७। तर्हिता ८।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय-
गणिविरचितायां हैमलघुप्रक्रियायां रुधादयः समाप्ताः।

---

## अथ तनादयः।

तनूयी विस्तारे। कृग्तनादेरुः। उश्नोः। तनोति तनुतः तन्वः-तनुवः ४। अतानीत्-अतनीत् ५। ततान ६। तन्यात् ७। तनिता ८। तनुते तन्वहे-तनुवहे ४।

### तन्भ्यो वा तथासिन्णोश्च ॥ १ ॥

तनादिभ्यः परस्य सिचस्ते थासि च लुप् वा स्यात्तद्योगे न्णोश्च लुप् न चेट्। अतत अतनिष्ट अतनिषाताम् अतनिषत। अतथाः अतनिष्ठाः ५। तेने ६। तनिषीष्ट ७। षणूयी दाने। सनोति ४। असानीत्-असनीत् ५। ससान ६। सनुते ४।

### सनस्तत्रावा ॥ २ ॥

सनो न्लुपि सत्या वा स्यात्। असात-असत असनिष्ट असाथाः असथाः असनिष्ठाः ५। सेने ६। क्षनूग् क्षिनूयी हिंसायाम्। क्षणोति ४। न श्वि-जागृशसेति वृद्धिनिषेधे, अक्षणीत् ५। चक्षाण ६। क्षण्यात् ७। क्षणिता ८। क्षणुते ४। अक्षत-अक्षणिष्ट

अक्षथाः-अक्षणिष्ठाः ५। चक्षणे ६। क्षणिषीष्ट ७। क्ष-णिष्यते ९। अक्षणिष्यत १०। एवं क्षिणोतेरपि। क्षिणोति क्षिणुते ४। अक्षेणीत् अक्षेणिष्ट ५। चिक्षेण चिक्षिणे ६।

इत्युभयपदिनः ।

वनुयि याचने। मनुयि बोधने। आत्मनेपदिनौ। वनुते १०। मनुते १०।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां तनादयः समाप्ताः ।

---

## अथ क्र्यादयः ।

डुक्रींग्श् द्रव्यविनिमये ।

### क्र्यादेः ॥ १ ॥

क्र्यादीनां कर्तृविहिते शिति श्नाः स्यात्। क्रीणाति। एषामीर्व्यञ्जनेऽद इतीत्वे, क्रीणीतः। श्नश्चात इत्यालोपे क्रीणन्ति १। क्रीणीयात् २। क्रीणातु-क्रीणीतात् क्रीणीहि ३। अक्रीणात् ४। अक्रैषीत् ५। चिक्राय चिक्रियतुः चिक्रयिथ-चिक्रेथ ६। क्रीयात् ७। क्रेता ८। क्रेष्यति ९। अक्रेष्यत् १०। क्रीणीते क्रीणाते क्रीणते ४। अक्रेष्ट ५। चिक्रिये ६। क्रेषीष्ट ७। ( परिव्यवात्क्रिय आत्मनेपदमेव * ) एवं प्रींग्श् तृप्तिकान्त्योः। प्रीणाति १०। प्रीणीते

१०। मींग्श् हिंसायाम्। अदुरुपसर्गेति णत्वे, प्रमीणाति ४।

## मिग्मीगोऽखलचलि ॥ २ ॥

अनयोर्यपि खल् अच् अल्वर्जेऽक्ङिति च विषये आः स्यात्। अमासीत् ५। ममौ मिम्यतुः ममिथ-ममाथ ६। मीयात् ७। माता ८। प्रमीणीते ४। अमास्त ५। मिम्ये ६। मासीष्ट ७। ग्रहीश् उपादाने। ग्रहव्रश्चेति य्वृति, गृह्णाति १। गृह्णीयात् २। गृह्णातु ३।

## व्यञ्जनाच्छ्नाहेरानः ॥ ३ ॥

व्यञ्जनात्परस्य श्नायुक्तस्य हेरानः स्यात्। गृहाण ३। अगृह्णात् ४।

## गृह्णोऽपरोक्षायां दीर्घः ॥ ४ ॥

ग्रहेर्यो विहित इट् तस्य दीर्घः स्यात् नतु परोक्षायाम्। नश्वीति वृद्धिनिषेधे दीर्घस्य स्थानिवद्भावात् इट ईतीति सिचो लुक्। अग्रहीत् अग्रहीष्टाम् अग्रहीषुः ५। जग्राह जगृहतुः जगृहुः। जग्रहिथ ६। गृह्यात् गृह्यास्ताम् गृह्यासुः ७। ग्रहीता ग्रहीतारौ ८। ग्रहीष्यति ९। अग्रहीष्यत् १०। गृह्णीते १। गृह्णीत २। गृह्णीताम् ३। अगृह्णीत ४। अग्रहीष्ट। हान्तस्येति वा ढत्वे अग्रहीढ्वम् अग्रही-

ध्वम् ५ । जगृहे जगृहिढ्वे ध्वे ६ । ग्रहीपीष्ट ग्रहीपीढ्वम् ध्वम् । पूञ्श् पवने ।

## प्वादेर्ह्रस्वः ॥ ५ ॥

प्वादेः शित्यत्यादौ ह्रस्वः स्यात् । पुनाति ४ । अपावीत् ५ । पुपाव ६ । पूयात् ७ । पविता ८ । पुनीते ४ । अपविष्ट ५ । पुपुवे ६ । पविषीष्ट ७ । पविष्यते ९ । अपविष्यत १० । एवं लूञ्श् छेदने । लुनाति १० । लुनीते १० । धूञ्श् कम्पने । धुनाति १० धुनीते १० । स्तॄञ्श् आच्छादने । प्वादित्वात् ह्रस्वे, स्तृणाति ४ । अस्तारीत् ५ । तस्तार ६ । स्तीर्यात् ७ । स्तरिता-स्तरीता ८ । स्तृणीते ४ । इट्सिजाशिषोरिति वेटि, वृतो नवेति वा दीर्घे, अस्तरिष्ट-अस्तरीष्ट । ऋवर्णादिति सिचः कित्वे, अस्तीर्ष्ट ५ । वृञ्श् वरणे । वृणाति ४ । अवारीत् ५ । ववार ६ । वूर्यात् ७ । वरिता-वरीता ८ । वृणीते ४ । अवरिष्ट-अवरीष्ट अवूर्ष्ट ५ । स्कृच्छृतोऽकि इति गुणे, ववरे ६ । वरिषीष्ट-वूर्षीष्ट ७ ।

इत्युभयपदिन ।

ज्यांश् वयोहानौ । ज्याव्यधः क्ङितीति य्वृति ।

## दीर्घमवोन्त्यम् ॥ ६ ॥

वेग्वर्जस्य य्वृदन्त्यं दीर्घं स्यादिति दीर्घे, प्वादेरिति ह्रस्वे च, जिनाति ४ । अज्यासीत् ५ । ज्या-

व्यधिवचेरिति पूर्वस्य इत्वे, जिज्यौ ६। जीयात् ७। ज्याता ८। ज्यास्यति ९। बन्धंश् बन्धने। बध्नाति बधान ४। अभान्त्सीत् ५। बबन्ध ६। बध्यात् ७। बन्द्धा ८। भन्त्स्यति ९। अशश् भोजने। अश्नाति अशान ४। आशीत् ५। आश ६। अश्यात् ७। अशिता ८। मुषश् स्तेये। मुष्णाति मुषाण ४। अमोषीत् ५। मुमोष ६। मुष्यात् ७। मोषिता ८। एवं पुषश् पुष्टौ। पुष्णाति १०। इत्यादि। ज्ञांश् अवबोधने। जाज्ञाजनोऽत्यादौ। जानाति ४। अज्ञासीत् ५। जज्ञौ ६। ज्ञायात्-ज्ञेयात् ७। ज्ञाता ८। ज्ञास्यति ९। अज्ञास्यत् १०। ज्ञोऽकर्मकत्वे आत्मनेपदम्। जानीते।

इति परस्मैपदिनः।

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय गणिविरचितायां हैमलघुप्रक्रियायां श्र्यादयः समाप्ताः।

---

## अथ स्वार्थिकप्रत्ययान्ताः।

## गुपौधूपविच्छिपणिपनेरायः ॥ १ ॥

एभ्यः पञ्चभ्यः स्वार्थे आयः प्रत्ययो भवति। गोपायति ४। धूपायति ४। पणायति ४। पनायति ४। (कमेर्णिङ् *) कामयते ४। (ऋतेर्डीयः *) ऋतीयते ४।

## अशवि ते वा ॥ २ ॥

गुपादिभ्यः सप्तभ्योऽशवृविषये आयादयो वा स्युः । अगोपायीत् । औदित्त्वादिड्वा । अगोपीत् । व्यञ्जनानामनिटीति वृद्धौ, अगौप्सीत् । गोपायामास । जुगोप ६ । गोपाय्यात्-गुप्यात् ७ । गोपायिता-गोपिता-गोप्ता ८ । आर्तीयीष्ट । डीयाभावे आर्तीत् ५ । ऋतीयांचक्रे आनर्त ६ । ऋतीयिषीष्ट । ऋत्यात् ७ । ऋतीयिता-अर्त्तिता ८ । ऋतीयिष्यते-अर्त्तिष्यति । (धातोः कण्ड्वादेर्यक् *) कण्डूयति ४ । अकण्डूयीत् ५ । कण्डूयामास ६ । कण्डूयिता ७ । एवं कण्डूयते ४ । अकण्डूयिष्ट ५ ।

इति स्वार्थिकप्रत्ययान्ता ।

---

### अथ चुरादयः ।

चुरण् स्तेये ।

## चुरादिभ्यो णिच् ॥ १ ॥

एभ्यः स्वार्थे णिच् स्यात् । वर्तमाना तिव् । कर्तर्यनद्भ्यः शव् गुणेऽयादेशे, लघोरुपान्त्यस्येति पूर्वस्य गुणे, चोरयति १ । चोरयेत् २ । चोरयतु-चोरयतात् ३ । अचोरयत् ४ । णिश्रीत्यादिना ङे ।

## उपान्त्यस्यासमानलोपिशास्वृदितो ङे ॥२॥

समानलोपिशास्वृदिदूर्जस्य धातोरुपान्त्यस्य ङ-परे णौ ह्रस्वः स्यात्। तत आद्योंश एकस्वर इति द्वित्वे चुचुरि इति द्वित्वे।

## लघोर्दीर्घोऽस्वरादेः ॥ ३ ॥

नास्ति समानलोपो यस्मिंस्तस्मिन् ङपरे णौ अस्वरादेर्धातोर्द्वित्वे पूर्वस्य लघोर्लघुनि धात्वक्षरे परे दीर्घः स्यात्।

## णेरनिटि ॥ ४ ॥

अनिट्यशिति प्रत्यये णेर्लुक् स्यात्। अचूचुरत् अचूचुरताम् अचूचुरन् ५। धातोरनेकस्वरादाम्। चोरयामास ६। चोर्यात् ७। चोरयिता ८। चोरयिष्यति ९। अचोरयिष्यत् १०। पूजण् पूजायाम्। पूजयति ४। अपूपुजत् ५। चितण् संवेदने। चेतयति ४। अचिचेतत् ५। चितुण् स्मृत्याम्। उदितः स्वरान्नोऽन्तः। चिन्तयति ४। अचिचिन्तत् ५। कृतण् संशब्दने।

## कृतः कीर्त्तिः ॥ ५ ॥

कृतणः कीर्त्तिः इत्यादेशः स्यात्। कीर्त्तयति ४।

## ऋद्‌वर्णस्य ॥ ६ ॥

उपान्त्यस्य ऋवर्णस्य ङपरे णौ वा ऋः स्यात्।

अचीकृतत्-अचिकीर्त्तत् ५ । गणण् सङ्ख्याने । गणयति ४ ।

## ई च गणः ॥ ७ ॥

गणेर्ङपरे णौ द्वित्वे पूर्वस्य ईरश्च स्याताम् । अजीगणत् अजगणत् । कथण् वाक्यप्रबन्धे । कथयति । अत इत्यकारलोपेन समानलोपित्वान्न सन्वद्भावः । अचकथत् ५ ।

## युजादेर्नवा ॥ ८ ॥

एभ्यो णिज् वा स्यात् । युजण् संपर्चने । योजयति योजति १० । सहण् मर्षणे । साहयति सहति १० ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां चुरादयः समाप्ताः ।

---

## अथ णिगन्तप्रक्रिया ।

## प्रयोक्तृव्यापारे णिग् ॥ १ ॥

कुर्वन्तं यः प्रयुङ्क्ते तद्व्यापारे वाच्ये धातोर्णिग् वा स्यात् । गकार उभयपदार्थः । णकारो वृद्ध्यर्थः । भवन्तं प्रयुङ्क्ते । नामिनोऽकलिहलेरिति वृद्धौ, भावयति ४ । भवन्तं प्रायुङ्क्त । णिश्रीति ङागमे, उपान्त्यस्याऽसमानलोपीति ह्रस्वे, णौ यत् कृतं कार्यं

तत्सर्वं स्थानिवद्भवतीति न्यायात्, भू इति द्वित्वे ह्रस्वत्वे भुभवि इति स्थिते।

## असमानलोपे सन्वल्लघुनि ङे ॥ २॥

नास्ति समानलोपो यत्र तस्मिन् ङपरे णौ द्वित्वे पूर्वस्य लघुनि धात्वक्षरे परे सनीव कार्यं स्यात्। यथा अवर्णान्तेआन्तस्थापवर्गे परे सनि पूर्वस्य ओरिः स्यात्। यथा च सनि पूर्वस्यात इः स्यात्तथात्रापि। ततो लघोर्दीर्घोऽस्वरादेरिति दीर्घे, णेरनिटीति णिलोपे, अबीभवत् ५।

## आमन्ताल्वाय्येत्नावय् ॥ ३॥

एषु पञ्चसु णेरय् स्यात्। भावयामास ६। भाव्यात् ७। भावयिता ८। भावयते ४। अबीभवत ५। पाचयति ४। अपीपचत् ५। पाचयते ४। अपीपचत ५। कारयति ४। अचीकरत् ५। कारयते ४। अचीकरत ५। रावयति ४। अरीरवत् ५। लावयति ४। अलीलवत् ५। पावयति ४। अपीपवत् ५। शासयति ४। अशशासत् ५। ढौकृङ् गतौ। ढौकमानं प्रयुङ्क्ते। ढौकयति ४। अडुढौकत् ५। शास्वृदितोवर्जनात् ह्रस्वनिषेधः। राजयति ४। अरराजत् ५। सरन्तं प्रयुङ्क्ते।

घटादीनां णौ ह्रस्वः स्यात् ञिणम्परे तु णौ वा दीर्घः । स्मरयति ४ ।

## स्मृदॄत्वरप्रथम्रदस्तृस्पशेरः ॥ ५ ॥

एषां ङपरे णौ द्वित्वे पूर्वस्यात् । असस्मरत् ।

## वा वेष्टचेष्टः ॥ ६ ॥

वेष्टि वेष्टने । चेष्टि चेष्टायाम् । अनयोर्ङपरे णौ पूर्वस्याद्वा स्यात् । वेष्टमानं चेष्टमानं प्रायुङ्क्त अववेष्टत्-अविवेष्टत् । अचचेष्टत्-अचिचेष्टत् ।

## भ्राजभासभाषदीपपीडजीवमीलकण-रणवणभणश्रणह्वेहेठलुटलुपलपां नवा ॥७॥

एषां सप्तदशानां ङपरे णावुपान्त्यस्य ह्रस्वो वा स्यात् । ह्रस्वे च पूर्वस्य सन्वद्भावो लघोर्दीर्घश्च । अबिभ्रजत्-अबभ्राजत् । अबीभसत्-अबभासत् । अदीदिपत्-अदिदीपत् । वर्तमानं प्रायुङ्क्त अवीवृतत् । ऋद्वर्णस्येति ऋत्वे गुणाभावः । पक्षे लघोरुपान्त्यस्येति गुणे, अववर्तत् । स्वापयति ।

## स्वपेर्यङ्ङे च ॥ ८ ॥

स्वपेर्यङि ङे किति च सस्वरान्तस्था य्वृत् स्यात् । ततो द्वित्वे लघोरुपान्त्यस्येति गुणे ह्रस्वत्वे दीर्घे च असूषुपत् ।

अर्तिरीव्लीह्रीक्नूयिक्ष्माय्यातां पुः ॥९॥

' एषामादन्तानां च णौ पुरन्तः स्यात्। अर्पयति । स्वरादेर्द्वितीय इति द्वित्वे, आर्पिपत् । रेपयति। क्नूयैङ् शब्दादनयोः। क्ष्मायैङ् विधूनने ।

य्वोः प्वय्व्यञ्जने लुक् ॥ १० ॥

णौ यूवर्जव्यञ्जनादौ च य्वोर्लुक् स्यात्। क्नोपयति । क्ष्मापयति । दापयति । अदीदपत् ।

णौ क्रीजीङः ॥ ११ ॥

एषां त्रयाणां णौ आत् स्यात् । क्रापयति जापयति अध्यापयति ।

णौ सन्ङे वा ॥ १२ ॥

सन्परे ङपरे च णौ इङो गा वा स्यात् । अध्यजीगपत्-अध्यापिपत् ।

चिस्फुरोर्नवा ॥ १३ ॥

चिस्फुरोर्णौ स्वरस्याद्वा स्यात्। चापयति-चाययति । स्फारयति-स्फोरयति ।

वियः प्रजने ॥ १४ ॥

गर्भाधाने वियो णावाद्वा स्यात्। पुरोवातो गाः प्रवापयति २ ।

जिघ्रतेरिः ॥ १५ ॥

अस्य डपरे णौ इर्वा स्यात् । अजिघ्रिपत्-अजिघ्रपत् । ( तिष्ठतेरिर्नित्यम्* ) अतिष्ठिपत् ।

सिध्यतेरज्ञाने ॥ १६ ॥

अज्ञानार्थस्य सिध्यतेर्णौ स्वरस्यात्स्यात् । अन्नं साधयति । सिध्यति तत्त्वं निश्चिनोति तं प्रयुङ्क्ते सेधयति तपः साधुम् ।

णावज्ञाने गमुः ॥ १७ ॥

अज्ञानार्थयोरिणिकोर्गमुः स्यात् । गमयति ग्रामम् । अधिगमयति प्रियम् । ज्ञाने तु प्रत्याययति ।

रुहः पः ॥ १८ ॥

रुहेर्णौ पो वा स्यात् । रोपयति-रोहयति वा तरुम् । ( लियो नोऽन्तः स्नेहद्रवे वा* ) घृतं विलीनयति विलाययति वा ।

लीङ्लीनोर्वा ॥ १९ ॥

अनयोर्यपि खलवर्जे क्ङिति च आद्वा स्यात् ।

लोलः ॥ २० ॥

लारूपस्य णौ स्नेहद्रवे गम्ये लोऽन्तो वा स्यात् । घृतं विलालयति विलापयति वा । स्नेहद्रव इति किम् । जटाभिरालापयते ।

पातेः ॥ २१ ॥

णौ लोऽन्तः स्यात्। पालयति (धूग्प्रीगोर्नः*) धूनयति। प्रीणयति।

## वो विधूनने जः ॥ २२ ॥

वा इत्यस्य विधूननेऽर्थे जोऽन्तः स्यात्। पक्षे णोपवाजयति।

## पाशाच्छासावेव्याह्वो यः ॥ २३ ॥

एषां सप्तानां णौ योऽन्तः स्यात्। पाययति।

## ङे पिवः पीप्य् ॥ २४ ॥

ण्यन्तस्य पिवतेर्ङे परे पीप्य् स्यान्न च द्विः। अपीप्यत्। शाययति। अवच्छाययति। अवसाययति। वाययति। व्याययति। ह्वाययति।

## णौ ङसनि ॥ २५ ॥

ह्वेगः सस्वरान्तस्थाङ्परे सन्परे च णौ विषये य्वृत् स्यात्। भ्राजभासेत्यादिना वोपान्त्यस्य ह्रस्वे। अजूहवत्-अजुहावत्। (श्वेर्वा य्वृत्*) अशूशवत्-अशिश्वयत्। (स्फायः स्फाव् णौ*) स्फावयति। शादिरगतौ शात्। पुष्पाणि शातयति। गतौ तु गाः शादयति।

## ञ्णिति घात् ॥ २६ ॥

हन्तेर्ञ्णिति घात् स्यात्। घातयति।

## ऊदुपो णौ ॥ २७ ॥

दुपेरुपान्त्यस्य णौ ऊत् स्यात् । दूपयति ।

## चित्ते वा ॥ २८ ॥

चित्तकर्तृकस्य दुपेरूद्वा स्यात् । चित्तं दोपयति दूपयति वा मैत्रः । गोहः स्वरे इत्यूत्वे, गूहयति । *घटादेर्ह्रस्वे दीर्घस्तु वा ञिणम्परे णौ वर्तते ।* घटयति । अघाटि-अघटि । घाटं २ । घटं २ । व्यथयति । अव्याथि अव्यथि । व्याथं २ व्यथं २ ।

## कगेवनूजनैजॄष्क्नस्रञ्जः ॥ २९ ॥

एषां षण्णां णौ ह्रस्वो भवति । ञिणम्परे तु णौ वा दीर्घः । कगयति । जनयति ( *णौ मृगरमणे रञ्जेर्नो लुक्* *) रजयति मृगान् । अराजि-अरजि ।

## अमोऽकम्यमिचमः ॥ ३० ॥

कम्यमिचमिवर्जस्यामन्तस्य णौ ह्रस्वः स्यात्, ञिणम्परे तु णौ वा दीर्घः । रमयति ।

## मारणतोषणनिशाने ज्ञश्च ॥ ३१ ॥

एष्वर्थेषु ज्ञो णौ ह्रस्वः स्यात् । संज्ञपयति पशुम् । विज्ञपयति गुरुम् । प्रज्ञपयति शस्त्रम् ।

## ज्वलह्वलह्मलग्लास्नावनूवमनमोऽनुपसर्गस्य वा ॥ ३२ ॥

एषामष्टानामनुपसर्गाणां णौ ह्रस्वो वा स्यात् ।

ज्वलयति-ज्वालयति । अनुपसर्गस्येति किम् । प्रज्वलयति । णिजन्तादपि णिग् । चोरयन्तं प्रयुङ्क्ते चोरयति । णिलुपि स्वरादेशत्वात्स्थानिवद्भावेनोपान्त्यत्वाभावान्न ह्रस्वः । अचुचोरत् ।

## अणिक्कर्मणिक्कर्तृकाण्णिगोऽस्मृतौ ॥ ३३ ॥

अणिगवस्थायां यत्कर्म तदेव णिगवस्थायां कर्ता यस्य तस्माण्णिगन्तादस्मृत्यर्थात् कर्तर्यात्मनेपदमेव स्यात् । आरोहयते हस्ती हस्तिपकम् ।

## अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥ ३४ ॥

अणिगवस्थायां यः प्राणिकर्तृकोऽकर्मकश्च धातुस्तस्माण्णिगन्तात्परस्मैपदमेव स्यात् । आसयति चैत्रम् ।

## चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजनः ॥ ३५ ॥

चल्याहारार्थेभ्य इङादिभ्योऽष्टाभ्यश्च णिगन्तेभ्यः परस्मैपदमेव स्यात् । चलयति । घटादित्वात् ह्रस्वः इत्यादि ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां णिजन्तप्रक्रिया समाप्ता ।

## अथ सन्प्रक्रिया ।

### तुमर्हादिच्छायां सन्नतत्सनः ॥ १ ॥

यो धातुरिषेः कर्म इषिणैव च समानकर्तृकः स तुमर्हस्तस्मादिच्छायामर्थे सन् वा स्यात् । न त्विच्छासन्नन्तात् । पठितुमिच्छति सागमे इडागमे च ।

### सन्यङश्च ॥ २ ॥

सन्नन्तस्य यङन्तस्य चाद्य एकस्वरोंऽशो द्विः स्यात् ।

### सन्यस्य ॥ ३ ॥

द्वित्वे पूर्वस्यातः सनि परे इः स्यात् । नाम्यन्तस्थेति षत्वे, पिपठिषति ४ । अपिपठिषीत् ५ । पिपठिषांचकार ६ । पिपठिष्यात् ७ । पिपठिषिता ८ । पिपठिषिष्यति ९ । अपिपठिषिष्यत् १० । स्वरादेर्द्वितीयः इति द्वित्वे, अटितुमिच्छति अटिटिषति । घस्लृ सनघतनी घञचलि । अत्तुमिच्छति जिघत्सति । अजिघत्सीत् ।

### ग्रहगुहश्च सनः ॥ ४ ॥

आभ्यामुवर्णान्ताच्च विहितस्य सन आदिरिट् न स्यात् ।

### रुद्विद्मुषग्रहस्वपप्रच्छः सन् च ॥५॥

एभ्यः क्त्वा सन् च किद्वत्स्यात् । कित्त्वाद्ग्रह-

ग्रश्चेति ग्वृति होधुट्पदान्ते इति हस्य ढत्वे गडद-
बादेरिति घत्वे जिघृक्षति ।

## उपान्त्ये ॥ ६ ॥

नामिन्युपान्त्ये सति धातोः सन्ननिट् किद्व-
त्स्यात् । जुघुक्षति बिभित्सति ।

## नामिनोऽनिट् ॥ ७ ॥

नाम्यन्तस्य धातोरनिट् सन् किद्वत्स्यात् । बुभू-
षति । रुरुदिषति विविदिषति । मुमुषिषति । स्वपेर्यङ्
चेति ग्वृत्, स्वापयितुमिच्छति सुषुप्सति ।

## स्वपो णावुः ॥ ८ ॥

स्वपेर्णौ सति द्वित्वे पूर्वस्य उः स्यात् । सुष्वा-
पयिषति ।

## स्वरहन्गमोः सनि धुटि ॥ ९ ॥

स्वरान्तस्य हन्गमोश्च धुडादौ सनि दीर्घः
स्यात् । जेर्गिः सन्परोक्षयोः । जिगीषति । ( चेः
किर्वा * ) चिचीषति चिकीषति । स्तोतुमिच्छति
तुष्टूषति । कृगो दीर्घे सति इर् । चिकीर्षति । हन्तु-
मिच्छति सनि द्वित्वे अडे हिहनेति घत्वे दीर्घे च,
जिघांसति ।

## सनीङश्च ॥ १० ॥

इङ इणिकोश्चाज्ञाने सनि गमुः स्यात् । अज्ञान
इति इण एव विशेषणं नान्ययोरसंभवात् ।

## प्राग्वत् सनः ॥ ११ ॥

सनः पूर्वो यो धातुस्तस्मादिव सन्नन्तात् कर्तर्यात्मनेपदं स्यात् । गमोऽनात्मने इतीड् निषेधः । इङ् अधिजिगांसते विद्याम् । इण् जिगमिषति ग्रामम् । इंक् मातुरधिजिगमिषति । ज्ञाने त्विणः प्रतियियिषति । णौ सन्डेवेति वा इङो गादेशे, अधिजिगापयिषति अध्यापिपयिषति ।

## वौ व्यञ्जनादेः सन्चाऽय्वः ॥ १२ ॥

वौ उदित्युपान्त्ये सति व्यञ्जनादेर्धातोः परः क्त्वाः सन् च सेटौ किद्वद्वा स्याताम् नतु य्व-न्तात् । दिद्युतिषते-दिद्योतिषते । लिलिखिषति लिले-खिषति । अय्व इति किम् । दिदेविषति । वृद्भ्यः स्यसनोरित्यात्मनेपदविकल्पे, न वृद्भ्य इति परस्मै-पदे, इड्निषेधे च, विवृत्सति-विवर्तिषते । कृतवृतनृ-तेतीड्विकल्पे निनृत्सति निनर्तिषति ।

## इवृधभ्रस्जदम्भश्रियूर्णुभरज्ञपिसनित-निपतिवृद्दरिद्रः सनः ॥ १३ ॥

इवन्ताद्दधादिभ्य ऋदन्तेभ्यो दरिद्रश्च सन आदिरिड् वा स्यात् । दिव् अनुनासिके च छ्वः शूट् । दुद्यूषति-दिदेविषति ।

## ऋध ईत् ॥ १४ ॥

ऋधः सादौ सनि ईत्स्यात् न चास्य द्विः ।

ईर्त्संति आर्दिधिषति । चिभर्जिषति-बिभ्रक्षति । भ-र्जादेशे, विभर्क्षति-विभर्जिषति ।

## दम्भो धिप्धीप् ॥ १५ ॥

दम्भेः सि सनि धिप्धीपौ स्याताम् । न च द्विः । धिप्सति-धीप्सति । दिदम्भिषति । शिश्रीषति-शिश्र-यिषति । युः सौत्रो धातुः । युयूषति ।

## ओजोऽन्तस्थापवर्गेऽवर्णे ॥ १६ ॥

द्वित्वे पूर्वस्य उतोऽवर्णान्ते जान्तस्थापवर्गे परे सनि इः स्यात् । यियविषति ।

## श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥ १७ ॥

शिश्रावयिषति शुश्रावयिषति । प्रोर्णुनूषति प्रोर्णुनविषति । भृगः स्वरहनेति दीर्घे ओष्ठ्यादुर् । बुभूर्षति-बिभरिषति ।

## ज्ञप्यापो ज्ञीपीप् न च द्विः ॥ १८ ॥

ज्ञपेरापेश्च सि सनि यथासंख्यं ज्ञीपीपौ स्याताम् । ज्ञीप्सति जिज्ञपयिषति ।

## सनि ॥ १९ ॥

सनेर्धुडादौ सन्याः स्यात् । सिषासति । सि-सनिषति ।

## णिस्तोरेवाऽस्वद्स्विद्सहः षणि ॥२०॥

स्वदादिवर्जानां ण्यन्तानां स्तोरेव च सकारस्य

नाम्यादेः परस्य षत्वभूते सनि परे षो भवति, नान्येषामिति षत्वं न भवति ।

## तनो वा ॥ २१ ॥

तनो धुडादौ सनि दीर्घो वा स्यात् । तितांसति-तितंसति तितनिषति ।

## रभलभशकपतपदामिः ॥ २२ ॥

एषां स्वरस्य सि सनि इः स्यान्न च द्विः । पित्सति पिपतिषति । प्राबुभूर्षति प्राविवरिषति २ । बुभूर्षते विवरिषति २ । तितीर्षति तितरीषति २ । दिदरिद्रासति दिदरिद्रिषति ।

## ऋस्मिपूङञ्जशौकॄगॄदृधृप्रच्छः ॥ २३ ॥

एभ्यो दशभ्यः परस्य सन आदिरिट् स्यात् । अरिरिषति । सिस्मयिषते । पिपविषति । अञ्जिजिषति अशिशिषते । चिकरीषति २ । जिगरीषति । आदिदरिषते । आदिधरिषते । उद्दिधीर्षुरिति तु ध्नादिकस्य रूपम् । रुदविदेति सनः किन्त्वे, पिपृच्छिषति । आप्तुमिच्छति ईप्सति । आरिप्सते । लिप्सति ।

## शको जिज्ञासायाम् ॥ २४ ॥

शकः सन्नन्तादस्मिन्नर्थे आत्मनेपदं स्यात् । विद्यां शिक्षते । अन्यत्र शिक्षति । स्थातुमिच्छति तिष्ठासति ।

ईर्त्सति अर्दिधिषति । विभर्जिषति-विभ्रक्षति । भर्जादेशे, विभर्क्षति-विभर्जिषति ।

## दम्भो धिप्धीप् ॥ १५ ॥

दम्भेः सि सनि धिप्धीपौ स्याताम् । न च द्विः । धिप्सति-धीप्सति । दिदम्भिषति । शिश्रीषति-शिश्रयिषति । युः सौत्रो धातुः । युयूषति ।

## ओजोऽन्तस्थापवर्गेऽवर्णे ॥ १६ ॥

द्वित्वे पूर्वस्य उतोऽवर्णान्ते जान्तस्थापवर्गे परे सनि इः स्यात् । यियविषति ।

## श्रुस्तुद्रुप्रुप्लुच्योर्वा ॥ १७ ॥

शिश्रावयिषति शुश्रावयिषति । प्रोर्णुनूषति प्रोर्णुनविषति । भृगः स्वरहनेति दीर्घे ओष्ठ्यादुर् । बुभूर्षति-बिभरिषति ।

## ज्ञप्यापो ज्ञीपीप् न च द्विः ॥ १८ ॥

ज्ञपेरापेश्च सि सनि यथासंख्यं ज्ञीपीपौ स्याताम् । ज्ञीप्सति जिज्ञपयिषति ।

## सनि ॥ १९ ॥

सनेर्धुडादौ सन्याः स्यात् । सिषासति । सिसनिषति ।

## णिस्तोरेवाऽस्वद्स्विद्सहः षणि ॥२०॥

स्वदादिवर्जाना ण्यन्तानां स्तोरेव च सकारस्य

नाम्यादेः परस्य पत्वभूते सनि परे पो भवति, नान्येषामिति पत्वं न भवति ।

## तनो वा ॥ २१ ॥

तनो धुडादौ सनि दीर्घो वा स्यात् । तितांसति-तितंसति-तितनिषति ।

## रभलभशकपतपदामिः ॥ २२ ॥

एषां स्वरस्य सि सनि इः स्यान्न च द्विः । पित्सति पिपतिषति । प्रावुवूर्षति प्राविवरिषति २ । वुवूर्षते विवरिषति २ । तितीर्षति तितरीषति २ । दिदरिद्रासति दिदरिद्रिषति ।

## ऋस्मिपूङ्ञ्जशोकृगृदृधृप्रच्छः ॥ २३ ॥

एभ्यो दशभ्यः परस्य सन आदिरिट् स्यात् । अरिरिषति । सिस्मयिषते । पिपविषति । अञ्जिजिषति अशिशिषते । चिकरीषति २ । जिजगरीषति । आदिदरिषते । आदिधरिषते । उद्दिधीर्षुरिति तु भ्वादिकस्य रूपम् । रुदविदेति सनः कित्त्वे, पिपृच्छिषति । आप्तुमिच्छति ईप्सति । आरिप्सते । लिप्सति ।

## शको जिज्ञासायाम् ॥ २४ ॥

शकः सन्नन्तादस्मिन्नर्थे आत्मनेपदं स्यात् । विद्यां शिक्षते । अन्यत्र शिक्षति । स्थातुमिच्छति तिष्ठासति ।

## भिमीमादामित्स्वरस्य ॥ २५ ॥

एषां दासंज्ञानां च सि सनि इत्स्यान्न च द्विः । मित्सति-मित्सते । दित्सति २ । धित्सति ।

## राधेर्वधे ॥ २६ ॥

सि सनि स्वरस्य इः स्यात् । प्रतिरित्सति । अन्यत्र आरिरात्सति गुरून् ।

## दीङः ॥ २७ ॥

सनि वा आत्स्यात् । दिदासते-दिदीषते । अव्याप्यस्य मुचेर्मोग् वा न च द्विः । मोक्षति-मुमुक्षति । सकर्मणस्तु मुमुक्षति वत्सम् ।

## गुप्तिजोर्गर्हाक्षान्तौ सन् ॥ २८ ॥

गुपो गर्हायां तिजः क्षान्तौ च वर्तमानात्स्वार्थे सन् स्यात् । जुगुप्सते तितिक्षते ।

## कितः संशयप्रतीकारे ॥ २९ ॥

संशयप्रतीकारार्थात्कितः स्वार्थे सन् स्यात् । विचिकित्सति चिकित्सति ।

## शान्दान्मान्वधान्निशानार्जवविचार-वैरूप्ये दीर्घश्चेतः ॥ ३० ॥

एभ्यश्चतुर्भ्यो निशानाद्यर्थेभ्यः स्वार्थे सन्

स्यात् । दीर्घश्च द्वित्वे पूर्वस्येतः । शीशांसति २ । दीदांसति २ । मिमांसते । बीभत्सते ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचिताया हैमलघुप्रक्रियाया सन्प्रक्रिया समाप्ता ।

---

## अथ यङ्प्रक्रिया ।

### व्यञ्जनादेरेकस्वराद्भृशाभीक्ष्ण्ये यङ् वा ॥ १ ॥

अमुख्यक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवधानेन साकल्येन संपत्तिः फलातिरेको वा भृशत्वम्, मुख्यक्रियायाः पाकादेः क्रियान्तराव्यवधानेनावृत्तिराभीक्ष्ण्यम्, तद्विशिष्टार्थवृत्तेर्व्यञ्जनादेरेकस्वराद्धातोर्यङ् वा स्यात् । ङकार आत्मनेपदार्थः । सन्यङश्चेति द्वित्वे ।

### आगुणावन्यादेः ॥ २ ॥

यङन्तस्य द्वित्वे पूर्वस्य न्याद्यागमवर्जस्य आगुणौ स्याताम् । भृशं पुनः पुनर्वा पचतीति पापच्यते ४ ।

### अतः ॥ ३ ॥

अकारान्ताद्धातोर्विहितेऽशिति प्रत्यये तस्यैव धातोर्लुगन्तादेशः स्यात् ।

## योऽशिति ॥ ४ ॥

धातोर्व्यञ्जनात्परस्य योऽशिति प्रत्यये लुक् स्यात्। अपापचिष्ट ५। पापचांचक्रे ६। पापचिषीष्ट ७। पापचिता ८। पापचिष्यते ९। अपापचिष्यत १०।

## अट्यर्तिसूत्रिमूत्रिसूच्यशूर्णोः ॥५॥

एभ्यः सप्तभ्यो भृशाभीक्ष्ण्ये यङ् वा स्यात्। स्वरादेर्द्वितीय इति य्यस्य द्वित्वे, व्यञ्जनस्यानादेर्लुगिति पूर्वस्य युलुकि, आत्वे च, अटाट्यते। क्ययङाशीर्ये इति गुणे अयिर इत्यत्र यवर्जनाद्ये परे रो द्वित्वं स्यादेव। अरार्यते। सोसूत्र्यते। मोमूत्र्यते। सोसूच्यते। अशाश्यते। प्रोर्णोनूयते। दीर्घश्च्वीति दीर्घे, तोष्टूयते।

## गत्यर्थात्कुटिले ॥ ६ ॥

व्यञ्जनादेरेकस्वराद्गत्यर्थात् कुटिल एवार्थे वर्तमानाद्धातोर्यङ् स्यात्।

## मुरतोऽनुनासिकस्य ॥ ७ ॥

आत्परो योऽनुनासिकस्तदन्तस्य यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्। चङ्क्रम्यते। तौर्मुमोरित्यनुस्वारः।

## गॄलुपसद्चरजपजभदशदहो गर्ह्ये ॥ ८ ॥

गर्ह्यार्थेभ्य एभ्योऽष्टाभ्यो यङ् स्यात्। ऋतां क्ङितीतीरादेशो (ग्रो यङि रो लृ स्यात्*) निजेगिल्यते, लोलुप्यते, सासद्यते।

## चरफलाम्॥ ९॥

एषां यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्।

## ति चोपान्त्यातोऽनोदुः॥ १०॥

चरफलां यङि तादौ च प्रत्यये उपान्त्यस्यात उः स्यात्, अनोदिति तस्य गुणो न स्यात्। चञ्चूर्यते, पम्फुल्यते।

## जपजभदंशदहभञ्जपशः॥ ११॥

एषां षण्णां यङि द्वित्वे पूर्वस्य मुरन्तः स्यात्। जञ्जप्यते। जञ्जभ्यते। दंदश्यते। दंदह्यते। बंभज्यते। पंपश्यते। (सिचो यङि षत्वं न स्यात्*) सेसिच्यते।

## न गृणाशुभरुचः॥ १२॥

एभ्यस्त्रिभ्यो यङ् न स्यात्। निन्द्यं गृणाति। भृशं शोभते। भृशं रोचते।

## ई्व्यञ्जनेऽयपि॥ १३॥

गापास्थासादामाहाकां यप्वर्जङ्क्ङित्यशिति व्यञ्जनादावीः स्यात्। जेगीयते पेपीयते इत्यादि। (घ्राध्मोर्यङि ईः स्यात्*) जेघ्रीयते देध्मीयते। तॄ तेतीर्यते। (हनो घ्नीर्वधे*) जेघ्नीयते। वधे इति किम्। गतौ जङ्घन्यते।

## क्ङिति यि शय् ॥ १४ ॥

शीङः क्ङिति यादौ शय् स्यात् । शाशय्यते ।

## ऋतो रीः ॥ १५ ॥

च्वियङ्क्यक्येषु परेषु ऋदन्तस्य ऋतो रीः स्यात् । चेक्रीयते ।

## ऋमतां रीः ॥ १६ ॥

ऋमतां यङन्तानां द्वित्वे पूर्वस्य रीरन्तः स्यात् । ( नृतेर्यङि नो ण् न स्यात्* ) नरीनृत्यते परीपृच्छ्यते । क्यङ्यङाशीर्ये इति गुणे ततो द्वित्वे सास्मर्यते । वा परोक्षायङीति य्वृद्धिकल्पे शोशूयते शेश्वीयते ।

## वञ्चस्रंसध्वंसभ्रंशकसपतपदस्कन्दोऽन्तो नीः ॥ १७ ॥

एषामष्टानां यङि द्वित्वे पूर्वस्य नीरन्तः स्यात् । नो व्यञ्जनस्येति नलुपि, वनीवच्यते सनीस्रस्यते इत्यादि । ( व्येस्यमोर्यङि य्वृत् स्यात्* ) वेवीयते सेसिम्यते । ( चायः कीर्यङि* ) चेकीयते । घञोरयङीति य्वृन्निषेधात्, वावद्यते । बोभूयते ४ । अबोभूयिष्ट ५ बोभूयांचक्रे ६ ।

इति यङन्तप्रक्रिया ।

## अथ यङ्लुगन्तप्रक्रिया ।

### बहुलं लुप् ॥ १ ॥

यङो लुप् बहुलं स्यात् ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

यङ्लुगन्तं परस्मैपदेऽदादिवद्बोध्यम् । यङ्तुरुस्तोरिति वा ईडागमे बोभवीति-बोभोति बोभूतः बोभुवति बोभोषि, इत्यादि १ । बोभूयात् २ बोभवीतु-बोभोतु बोभूतात् । ङित्त्वेन वित्वस्य बाधनाच्च गुणः, बोभूहि २ बोभूतात् ३ । अबोभवीत्-अबोभोत् अबोभूताम् । अबोभवुः ४ । पिन्नेतिदेति सिज्लुपि ।

"तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
एकस्वरनिमित्तं च पञ्चैतानि न यङ्लुपि"

इति । भवतेः सिज्लुपीति गुणनिषेधाभावे अबोभोत् अबोभोताम् अबोभूवन् ५ । बोभवाञ्चकार ६ । बोभूयात् बोभूयास्ताम् ७ ।

### न वृद्धिश्चाविति क्लिल्लोपे ॥ २ ॥

अविति प्रत्यये यः कितो ङितश्च लोपस्तस्मिन् सति गुणो वृद्धिश्च न स्यात् । वेभिदिता मरीमृ-

जिता । जङ्गमीति जङ्गन्ति । यमिरमिनमिगमीति मूलुपि जङ्गतः । गमहनेत्युपान्त्यलुकि जङ्गाति ।

## मोनो म्वोश्च ॥ ३ ॥

मन्तस्य धातोरन्तस्य पदान्तस्थस्य म्वोश्च परयोर्नः स्यात् । जङ्गन्मि जङ्गन्वः जङ्गन्मः । चङ्कनीति चङ्कन्तीत्यादि ।

## आः खनिसनिजनः ॥ ४ ॥

एषां धुडादौ क्ङित्याः स्यात् । चङ्खातः चङ्खनति ।

## रिरौ च लुपि ॥ ५ ॥

ऋमतां यङो लुपि द्वित्वे पूर्वस्य रिरौ रीश्चान्तः स्यात् । चरिकरीति चर्करीति चरीकरीति ३ । चरिकर्ति-चर्कर्ति-चरीकर्ति ६ । चरिकृतः-चर्कृतः-चरीकृतः चरिक्रति ३ । ४ । अचरिकरीत् ३ । ५ । चरिकरामास ३ । ६ । चरिक्रियात् ३ । ७ । चरिकरिता ३ । ८ । नरिनर्ति ३ नरीनृतीति ३ । वरिवर्त्ति वरीवर्त्ति ३ । अवरिवृतीत् ३ । जरिगृधीति ३ । जरिगृद्धि ३ । अजरिघर्त् अजरिगृद्धाम् । रुत्वं लुग् दीर्घौ । अजर्घाः । जाग्रहीति-जाग्राढि जागृढः जागृहति । जाग्रहीषि-जाग्रक्षि जाग्रहिता । पाप्रच्छीति । अनुनासिके चेति शत्वे पाप्रष्टि पापृष्टः पापृच्छति पाप्रश्मि पापृच्छ्मः ।

इति यङ्लुगन्तप्रक्रिया ।

## अथ नामधातुप्रक्रिया ।

काम्यक्यन्णिज्युतान्तानि
क्विप्क्यङन्तानि यानि च ॥
तानि नामानि धातुत्वं
यान्ति ते नामधातवः ॥ १ ॥

### द्वितीयायाः काम्यः ॥ १ ॥

द्वितीयान्तादिच्छायां काम्यो वा स्यात् । इदमिच्छति इदंकाम्यति ४ । ऐदंकाम्यीत् ५ । इदंकाम्यांचकार ६ । इदंकाम्यात् ७ । इदंकाम्यिता ८ । इदंकाम्यिष्यति ९ । ऐदंकाम्यिष्यत् १० ।

### अमाव्ययात् क्यन् च ॥ २ ॥

मान्ताव्ययवर्जाद्द्वितीयान्तादिच्छायां क्यन् काम्यश्च वा स्यात् ।

### क्यनि ॥ ३ ॥

अवर्णान्तस्य क्यनि ईः स्यात् । पुत्रमिच्छति पुत्रीयति ४ । अपुत्रीयीत् अपुत्रीयिष्टाम् ५ । पुत्रीयामास ६ । पुत्रीयिता ८ । पुत्रीयिष्यति ९ ।

### आधाराच्चोपमानादाचारे ॥ ४ ॥

मान्ताव्ययवर्जादुपमानाद्द्वितीयान्तादाधाराच्च नाम्न आचारे क्यन् वा स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । प्रासादे इवाचरति प्रासादीयति कुट्याम् ।

## कर्तुः क्विप् गल्भक्लीबहोडात्तु ङित् ॥ ५ ॥

कर्तुरुपमानादाचारेऽर्थे क्विप् वा स्यात् गल्भादिभ्यस्तु स एव ङित् । अश्व इवाचरति अश्वति प्रगल्भते क्लीबते होडते ।

## क्यङ् ॥ ६ ॥

कर्तुरुपमानादाचारे क्यङ् वा स्यात् । दीर्घश्च्वीति दीर्घे, हंसायते ४ । अहंसायिष्ट ५ । हंसायांचक्रे ६ । हंसायिषीष्ट ७ । (सो वा लुक् च क्यङि*) पयायते पयस्यते । (ओजोप्सरसो नित्यं सलुक्*) ओजायते अप्सरायते । ऋतो रीः, मात्रीयते । क्यङ्मानिपित्तद्धिते इति पुंवद्भावे श्येनीवाचरतीति श्येतायते काकः ।

## नं क्ये ॥ ७ ॥

नान्तं नाम क्ये परे पदं न स्यात् । राजीयति राजायते । य्यक्ये इत्यवादेशे गव्यति गव्यते ।

## डाच् लोहितादिभ्यः षित् ॥ ८ ॥

एभ्यः कर्तृभ्यश्च्व्यर्थे षित् क्यङ् स्यात् ।

## क्यङ्षो नवा ॥ ९ ॥

क्यङ्षन्तादात्मनेपदं वा स्यात् । पटपटायति, पटपटायते । लोहितायति, लोहितायते इत्यादि ।

## तपसः क्यन् ॥ १० ॥

अस्मात्कर्मणः कृतावर्थे क्यन् वा स्यात् । तपः करोति तपस्यति ।

**नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये ॥ ११ ॥**

एभ्यः कर्मभ्यो यथासंख्यमर्चादिष्वर्थेषु क्यन् वा स्यात् । नमस्यति । वरिवस्यति । चित्रीयते ।

**क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायम् ॥ १२ ॥**

एष्वर्थेषु यथासङ्ख्यमशनायादयः क्यन्नन्ता निपात्यन्ते ॥ अशनायति । उदन्यति । धनायति ।

**वृषाश्वान्मैथुने स्सोऽन्तः ॥ १३ ॥**

आभ्यां मैथुनार्थाभ्यां क्यनि स्सोऽन्तः स्यात् । वृषस्यति गौः । अश्वस्यति वडवा ।

**अस् च लौल्ये ॥ १४ ॥**

भोगेच्छातिरेको लौल्यं तत्र गम्ये क्यनि परे नाम्नः स्सोऽसूचान्तः स्यात् । द्विसकारपाठान्नास्य षत्वम् । दधिस्यति दध्यस्यति ।

**णिज्बहुलं नाम्नः कृगादिषु ॥१५॥**

कृगादीनां धातूनामर्थे नाम्नो णिज् बहुलं स्यात् । त्रन्त्यस्वरादेरित्यन्त्यस्वरादिलुकि, मुण्डं करोति मुण्डयति छात्रम् । पटुमाचष्टे पटयति । वृक्षं रोपयति वृक्षयति । कृतं गृह्णाति कृतयति ।

**सत्यार्थवेदस्याः ॥ १६ ॥**

एषां णिच्संनियोगे आः स्यात् । सत्यापयति अर्थापयति । वेदापयति । प्रियस्थिरेत्यादिना प्राद्यादेशे, प्रियमाचष्टे प्रापयति इत्यादि । स्थूलदूरेत्यादिना, स्थूलमाचष्टे स्थवयति ।

इति नामधातुप्रक्रिया ।

---

अथ भावकर्मणोः प्रक्रिया ।

## तत्साप्यानाप्यात्कर्मभावे कृत्यक्तखलर्थाश्च ॥ १ ॥

तदात्मनेपदं कृत्यक्तखलर्थाश्च प्रत्ययाः सकर्मकाद्धातोः कर्मणि अकर्मकादविवक्षितकर्मकाच्च भावे स्युः ।

## क्यः शिति ॥ २ ॥

सर्वस्माद्धातोर्भावकर्मविहिते शिति क्यः स्यात् । अत्र कर्मणि प्रत्ययविधानेनोक्तत्वात्कर्मणि प्रथमा । कर्मापेक्षाण्यर्थवचनानि च ।

नीवह्यहिक्रुषोण्यन्ता-
शुष्टिमृग्रच्छिचिरधिज्ञाम्यर्थाः ।
पचिपाचिदंटिकृगृह्य-
मथिजिमुषा द्विकर्माणः ॥ १ ॥

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्ष्यार्थयोः शब्दकर्मणां च निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानामुक्तता मता ।

पठ्यते ग्रन्थः शिष्येण, पठ्येते ग्रन्थौ, पठ्यन्ते ग्रन्थाः । पठ्यसे त्वं पठ्ये अहं ।

## भावकर्मणोः ॥ ३ ॥

सर्वस्माद्धातोर्भावकर्मविहितेऽद्यतन्यास्ते ञिच् स्यात् तलुक् च । अपाठि अपठिषाताम् अपठिषत ५ । पेठे ६ । पठिषीष्ट ७ । पठिता ८ । पठिष्यते ९ । अपठिष्यत १० । ऋतो रिः शक्याशीर्ये । क्रियते १ । क्रियेत २ । क्रियताम् ३ । अक्रियत ४ । अकारि ।

## स्वरग्रहदृशहन्भ्यः स्यसिजाशीः । श्वस्तन्यां ञिड् वा ॥ ४ ॥

स्वरान्ताद्ग्रहादेश्च स्यसिजाशीःश्वस्तनीषु ञिड् वा स्यात् । नामिनोऽकलिहलेरिति वृद्धौ । अकारि अकारिषाताम्-अकृषाताम् अकारिषत-अकृषत ५ । चक्रे ६ । कारिषीष्ट-कृषीष्ट ७ । कारिता-कर्ता ८ । कारिष्यतेकरिष्यते ९ । अकारिष्यत-अकरिष्यत १० । ईर्व्यञ्जने युपि दीयते ।

## आत ऐः कृञ्ञौ ॥ ५ ॥

आदन्तस्य धातोर्ञ्णिति कृति ञौ च ऐः

स्यात्। अदायि अदायिपाताम्। पक्षे इश्च स्यादः। अदिपाताम् ५। ददे ६। दायिपीष्ट-दासीष्ट ७। दायिता-दाता ८। दायिष्यते-दास्यते ९। गृह्यते ४। अग्राहि अग्राहिपाताम्-अग्रहीपाताम् अग्राहिढ्वम्-अग्राहिध्वम्-अग्रहीढ्वम् २। जगृहे ६। ग्राहिपीष्टग्रहीपीष्ट ग्राहिपीढ्वम्-ग्रहिपीढ्वम् ,२।७। ग्राहिता-ग्रहीता ८। ग्राहिष्यते-ग्रहीष्यते ९। अदर्शि अदर्शिपाताम्-अदृक्षाताम् ५। ददृशे ६। दर्शिपीष्ट-दृक्षीष्ट ७। दर्शिता-द्रष्टा ८ दर्शिष्यते-द्रक्ष्यते । ञिणवि घन्। अघानि अघानिपाताम् । अद्यतन्यां वा त्वात्मने इति वा वधादेशे, अवधि अवधिपाताम्-अहसाताम् ५। जघ्ने ६। घानिपीष्ट। हनो वध आशिष्यञौ। वधिपीष्ट ७ घानिता-हन्ता ८ घानिष्यते-हनिष्यते ९।

## ये नवा ॥ ६ ॥

खनिसनिजनां ये क्ङिति आ वा स्यात् । खायते-खन्यते। सायते-सन्यते। जायते-जन्यते। तनः क्ये आ वा स्यात्, तायते-तन्यते। अमोऽकम्यमि० ञ्णि वा दीर्घे, अशामि-अशमि अशामिपाताम्-अशमिपाताम्। ण्यन्तत्वाभावे।

## मोऽकमियमिरमिनमिगमिवम्याचमः ॥७॥

कम्यादिवर्जमान्तस्य धातोर्ञ्णिति कृति ञौ च

वृद्धिर्न स्यात् । अशमीति निषेधे अकामि । ( विश्रमेर्वा* ) व्यश्रामि-व्यश्रमि ।

## ञिख्णमोर्वा ॥ ८ ॥

लभः स्वरान्नोन्तो वा स्यात् ञौ ख्णमि च । अलाभि-अलम्भि । भञ्जेर्ञौ वा लोपः स्यात् । अभाजि-अभञ्जि । भावो धात्वर्थस्तस्यैकत्वादात्मनेपदैकवचनम् । चैत्रेण भूयते १० ।

> लज्जासत्तास्थितिजागरणं
> वृद्धिक्षयभयजीवितमरणम् ।
> शयनक्रीडारुचिदीस्यर्था
> धातव एते कर्मविमुक्ताः ॥ १ ॥

अविवक्षितकर्मकोऽप्यकर्मक एव । पच्यते १० । अकर्मकोप्युपसर्गवशात् सकर्मतामेति । अनुभूयते सुखं साधुना । अन्वभावि अन्वभविषाताम्-अन्वभाविषाताम् ५ ।

## एकधातौ कर्मक्रिययैकाऽकर्मक्रिये ॥ ९ ॥

एकस्मिन्धातौ कर्मस्थक्रियया पूर्वदृष्टया एका अभिन्ना संप्रत्यकर्मिका क्रिया यस्य तस्मिन्कर्तरि कर्मकर्तृरूपे धातोर्ञिक्यात्मनेपदानि स्युः। उक्तं च। यत्र कर्मैव कर्तृत्वं याति कर्ता तु नोच्यते । ञिक्यात्मनेपदं धातोरुक्तिः सा कर्मकर्तरि २ ।

अकारि । स्वरदुहो वा ञिच्-अकृत क्रियते करिष्यते वा कटः स्वयमेव । पचिदुहेः अपाचि पच्यते पक्ष्यते वा ओदनः स्वयमेव । अदोहि दुग्धे अदुग्ध गौः स्वयमेवेत्यादि । क्वचित् ञिक्यौ न स्याताम् । अलमकृत अलंकुरुते कन्या स्वयमेव ।

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायामाख्यातप्रक्रिया समाप्ता ।

इति द्वितीया वृत्तिः संपूर्णा ॥

---

## अथ कृदन्तप्रक्रिया निरूप्यते ॥

### आतुमोऽत्यादिकृत् बहुलम् ॥ १ ॥

इत्यादि ।

### कर्त्तरि ॥ २ ॥

कृदर्थविशेषोक्तिं विना कर्तरि स्यात् ।

### णकतृचौ ॥ ३ ॥

धातोरेतौ स्याताम् । करोतीति कारकः कर्त्ता । सेटां-स्ताद्यशित इतीडागमे एधिता । धूगौदित इति वेटि गोप्ता गोपिता । सहिवहेरिति सोढा वोढा । ञ्णितीत्युपान्त्यवृद्धौ पाचकः ।

### अच् ॥ ४ ॥

धातोरच् स्यात् । करः हरः ।

## लिहादिभ्यः ॥ ५ ॥

एभ्योऽच् स्यात्। लेहः शेपः।

## ब्रुवः ॥ ६ ॥

ब्रूगोऽचि ब्रुवः स्यात्। ब्राह्मणब्रुवः।

## नन्द्यादिभ्योऽनः ॥ ७ ॥

नन्दनः सहनः।

## ग्रहादिभ्यो णिन् ॥ ८ ॥

गृह्णातीति ग्राही। तिष्ठतीति स्थायी।

## नाम्युपान्त्यप्रीकृगृज्ञः कः ॥ ९ ॥

नाम्युपान्त्येभ्यः प्र्यादिभ्यश्चतुर्भ्यश्च कः स्यात्। क्षिपः प्रियः किरः गिरः ज्ञः।

## घ्राध्मापाट्धेदृशः शः ॥ १० ॥

एभ्यः शः स्यात्। शकारः शित्कार्यार्थः। जिघ्रः उद्धमः पिबः उद्धयः उत्पश्यः।

## साहिसातिवेद्युदेजिधारिपारिचेते-रनुपसर्गात् ॥ ११ ॥

एभ्योऽनुपसर्गेभ्यो ण्यन्तेभ्यः शः स्यात्। साहयः सातयः वेदयः उदेजयः धारयः पारयः चेतयः।

## नृत्खन्रञ्जः शिल्पिन्यकट् ॥ १२ ॥

एभ्यः शिल्पिनि कर्तर्यकट् स्यात्। नर्तकः खनकः रजकः।

## गस्थकः टनण् च ॥ १३ ॥

गः शिल्पिनि कर्तर्येतौ स्याताम् । गाथकः । आत ऐः कृञ्ञौ, गायनी ।

## तिक्कृतौ नाम्नि ॥ १४ ॥

आशीर्विषये संज्ञायां गम्यायां तिकृतश्च सर्वे प्रत्ययाः स्युः ।

## अहन्पञ्चमस्य क्विक्ङिति ॥ १५ ॥

हन्वर्जपञ्चमान्तस्य क्वौ धुडादौ क्ङिति च दीर्घः स्यात् । शम्यादित्याशास्यमानः शान्तिः । क्वचित्तिकि न दीर्घः । रन्तिः । वर्धतामित्याशास्यमानो वर्धमानः ।

## कर्मणोऽण् ॥ १६ ॥

कर्मणः पराद्धातोरण् स्यात् । कुम्भं करोतीति कुम्भकारः ।

## आतोडोऽह्वावामः ॥ १७ ॥

कर्मणः परादनुपसर्गात् ह्वावामावर्जादादन्ताद्धातोर्डः स्यात् । गोदः । अह्वावाम इति किम् । स्वर्गह्वायः तन्तुवायः धान्यमायः ।

## आशिषि हनः ॥ १८ ॥

कर्मणः पराद्धन्तेराशिषि गम्यायां टः स्यात् । शत्रुहः ।

## क्लेशादिभ्योऽपात् ॥ १९ ॥

क्लेशादेः कर्मणः परादपपूर्वाद्धन्तेर्डः स्यात्। क्लेशापहः तमोपहः।

## अचित्ते टक् ॥ २० ॥

कर्मणः पराद्धन्तेरचित्तवति कर्तरि टक् स्यात्। वातघ्नं तैलम्। अचित्त इति किम्। पापघातो यतिः।

## ब्रह्मादिभ्यः ॥ २१ ॥

एभ्यः कर्मभ्यः पराद्धन्तेष्टक् स्यात्। ब्रह्मघ्नः गोघ्नः पापी। राजघः निपातोऽयम्।

## कुक्ष्यात्मोदराद्भृगः खिः ॥ २२ ॥

एभ्यः कर्मभ्यः पराद्भृगः खिः स्यात्। ख इत्।

## खित्यनव्ययारुषोर्मोऽन्तो ह्रस्वश्च ॥ २३ ॥

स्वरान्तस्यानव्ययस्यारुषश्च खित्प्रत्ययान्ते उत्तरपदे मोऽन्तो यथासंभवं ह्रस्वश्च स्यात्। कुक्षिम्भरिः, आत्मम्भरिः, उदरम्भरिः।

## अर्होऽच् ॥ २४ ॥

कर्मणः परादर्हेरच् स्यात्। पूजार्हः साधुः, पूजार्हा साध्वी।

## धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद्ग्रहः ॥ २५ ॥

एभ्यो दशभ्यः कर्मभ्यः पराद्ग्रहेरच् स्यात्। धनुर्ग्रहः ।

आयुधादिभ्यो धृगोऽदण्डादेः ॥ २६ ॥

दण्डादिवर्जादायुधादेः पराद्धृगोऽच् स्यात् । धनुर्धरः। भूधरः। अदण्डादेरिति किम्। दण्डधारः।

हृगोवयोऽनुद्यमे ॥ २७ ॥

कर्मणः पराद्धृगो वयस्यनुद्यमे गम्येऽच् स्यात्। अस्थिहरः श्वा । उद्यम उत्क्षेपणमाकाशस्थस्य वा धारणं तदभावे-मनोहरा स्रक् । उद्यमे तु भारहारः । ( आङः शीले* ) पुष्पाहरः ( दृतिनाथात्पशाविः* ) दृतिहरिः श्वा । नाथहरिः सिंहः ।

रजःफलेमलाद्ग्रहः ॥ २८ ॥

एभ्यः कर्मभ्यः पराद्ग्रहेरिः स्यात् । रजोग्रहिः, फलेग्रहिः, मलग्रहिः ।

देववातादापः ॥ २९ ॥

आभ्यामाप इः स्यात् । देवापिः वातापिः ।

शकृत्स्तम्बाद्वत्सव्रीहौ कृगः ॥ ३० ॥

आभ्यां कर्मभ्यामनयोः कर्त्रोः कृग इः स्यात् । शकृत्करिः वत्सः, स्तम्बकरिर्व्रीहिः । ( किंयत्तद्बहोरः* ) किंकरः यत्करः तत्करः बहुकरः ।

सङ्ख्याऽहर्दिवाविभानिशाप्रभाभा-

श्रित्रकर्त्राद्यन्तानन्तकारबाहूरुर्धनुर्नान्दीलिपिलिविबलिभक्तिक्षेत्रजङ्घाक्षपाक्षणदारजनिदोषादिनदिवसाट्टः ॥ ३१ ॥

एभ्योऽष्टाविंशतेः परात् कृगष्टः स्यात्। संख्याकर इत्यादि।

क्षेमप्रियमद्रभद्रात् खाऽण् ॥ ३२ ॥

एभ्यश्चतुर्भ्यः परात्कृगः खाऽणौ स्याताम्। क्षेमंकरः क्षेमकारः।

मेघर्तिभयाऽभयात्खः ॥ ३३ ॥

एभ्यश्चतुर्भ्यः परात्कृगः खः स्यात्। मेघंकरः ऋतिंकरः भयंकरः अभयंकरः। (प्रियवशाद्वद खः*) प्रियंवदः वशंवदः। द्विषंतपपरंतपौ निपातौ। (परिमाणार्थमितनखात्पचः खः*) प्रस्थंपचः मितंपचः नखंपचः। (कूलाभ्रकरीषात्कषः खः*) कूलंकषा अभ्रंकषा करीषंकषा।

सर्वात्सहश्च ॥ ३४ ॥

सर्वपूर्वात्सहेः कषेश्च खः स्यात्। सर्वंसहः सर्वंकषः।

मन्याण्णिन् ॥ ३५ ॥

कर्मणः परान्मन्यतेर्णिन् स्यात्। पण्डितमानी बन्धोः।

## कर्तुः खश् ॥ ३६ ॥

प्रत्ययार्थात्कर्तुः कर्मणः परान्मन्यतेः खश् स्यात्। आत्मानं पण्डितं मन्यते इति पण्डितंमन्यः।

## एजेः ॥ ३७ ॥

कर्मणः परादेजेः खश् स्यात्। जनमेजयः।

## शुनीस्तनमुञ्जकूलास्यपुष्पात् ट्वेः ॥ ३८ ॥

एभ्यः परात् ट्वेः खश् स्यात्। शुनीन्धयः।

## नाडीघटीखरीमुष्टिनासिका-वाताद् ध्मश्च ॥ ३९ ॥

एभ्यः षड्भ्यो ध्मः ट्वेश्च खश् स्यात्। नाडींधमः। नाडींधयः। (पाणिकरात् ध्मः खश्*) पाणिंधमः। (वहाऽभ्राल्लिहः*) वहंलिहः अभ्रंलिहः। (बहुविध्यरुस्तिलात्तुदः*) बहुंतुदः। (ललाटवातशर्धात्तपाजहाकः*) ललाटंतपः। (असूर्योग्राद् दृशः*) असूर्यंपश्या राजदाराः। (कूलादुद्रुजोद्वहः*) कूलमुद्रुजो गजः। कूलमुद्वहा नदी। इरंमदः निपातोऽयम्।

## नग्नपलितप्रियान्धस्थूलसुभगाढ्य-तदन्ताच्य्वर्थेऽच्वेर्भुवः खिष्णु-खुकञौ ॥ ४० ॥

नग्नादिभ्यः सप्तभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः पराद्भुवः खिष्णुखुकञौ स्याताम्। अनग्नो नग्नो भवतीति नग्नंभविष्णुः नग्नंभावुकः। तदन्ते सुनग्नंभविष्णुः सुनग्नंभावुकः इत्यादि।

## कृगः खनट् करणे ॥ ४१ ॥

नग्नादिसप्तकाद्च्व्यन्ताच्व्यर्थवृत्तेः परात् कृगः करणे खनट् स्यात्। अनग्नो नग्नः क्रियतेऽनेनेति नग्नंकरणं द्यूतम्। सुनग्नंकरणम्।

## नाम्नो गमः खड्डौ च विहायसस्तु विहः ॥ ४२ ॥

नाम्नः पराद्गमेः खड्डखाः स्युः विहायसो विहश्च। तुरंगः विहंगः। तुरगः विहगः। तुरंगमः विहंगमः।

## शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपं प्रियालसहस्तिसूचके ॥४३॥

एते चत्वार एषु चतुर्ष्वर्थेषु निपात्याः।

## दुहेर्डुघः ॥ ४४ ॥

नाम्नः पराद्दुहेर्डुघः स्यात्। कामदुघा।

## भजो ञिण् ॥ ४५ ॥

नाम्नः पराद्भजो ञिण् स्यात्। अर्द्धं भजतीति अर्द्धभाक्।

## मन्वन्क्वनिप् विच् ॥ ४६ ॥

क्वचिन्नाम्नः पराद्धातोरेते यथालक्ष्यं स्युः । सुदामा ।

## वन्याङ् पञ्चमस्य ॥ ४७ ॥

वनि पञ्चमस्य आङ् स्यात् । विजायते इति विजावा । क्वनिप् सुधीवा । विच् शुभंयाः ।

## क्विप् ॥ ४८ ॥

नाम्नः पराद्धातोर्यथालक्ष्यं क्विप् स्यात् । स्रंस-ध्वंसेत्यादिना दत्वे, उखास्रत् । प्रशाम्यतीति मो नो म्वोश्चेति नत्वे, प्रशान् ।

## दिद्युद्दद्जगज्जुहूवाक्प्राड्धीश्रीश्रूज्वायतस्तूकटप्रूपरिव्राड्भ्राजादयः क्विपः ॥ ४९ ॥

एते क्विबन्ता निपात्याः । तत्त्वप्राड् तत्त्वप्राशी ।

## त्यदाद्यन्यसमानादुपमानाद्व्याप्ये दृशष्टक्सकौ च ॥ ५० ॥

एभ्य उपमानेभ्यो व्याप्येभ्यः पराद्दृशेर्व्याप्य एव टक्सकौ क्विप् च स्युः ।

## अन्यत्यदादेराः ॥ ५१ ॥

अन्यस्य त्यदादेश्च दृगादावुत्तरपदे आः स्यात् ।

स्य इव दृश्यते इति त्यादृशः त्यादृशी । त्यादृक्षः त्यादृक्षी । त्यादृक् । एवमन्यादृशः । ईदृक् ।

दृग्दृशदृक्षे ॥ ५२ ॥

समानस्य सः स्यात् । सदृक् ६ सदृशः ६ ईदृशः ६ कीदृशः ६ ।

इदंकिमीत् की ॥ ५३ ॥

दृगादावुत्तरपदे इदंकिमौ ईत्कीरूपौ स्याताम् । ईदृक् ३ कीदृक् ३ ।

कर्तुर्णिन् ॥ ५४ ॥

कर्त्रर्थादुपमानात्परान्धातोर्णिन् स्यात् । उष्ट्रक्रोशी ।

अजातेः शीले ॥ ५५ ॥

अजातिवाचिनो नाम्नः पराद्धातोः शीलेऽर्थे वर्तमानाण्णिन् स्यात् । उष्णभोजी । अजातेरिति किम् । शालीन् भोक्ता । (साधोस्तथा*) साधुकारी ।

ब्रह्मभ्रूणवृत्रात्क्विप् ॥ ५६ ॥

एभ्यस्त्रिभ्यः कर्मभ्यः पराद्भूतार्थाद्धन्तेः क्विप् स्यात् । ब्रह्म हतवान् ब्रह्महा ।

कृगः सुपुण्यपापकर्ममन्त्रपदात् ॥ ५७ ॥

सोः पुण्यादेः कर्मणश्च पराद्भूतार्थात्कृगः क्विप् स्यात् ।

## मन्वन्क्वनिप् विच् ॥ ४६ ॥

क्वचिन्नाम्नः पराद्धातोरेते यथालक्ष्यं स्युः । सुदामा ।

## वन्याङ् पञ्चमस्य ॥ ४७ ॥

वनि पञ्चमस्य आङ् स्यात् । विजायते इति विजावा । क्वनिप् सुधीवा । विच् शुभंयाः ।

## क्विप् ॥ ४८ ॥

नाम्नः पराद्धातोर्यथालक्ष्यं क्विप् स्यात् । स्रंस-ध्वंसेत्यादिना दत्वे, उखास्रत् । प्रशाम्यतीति मो नो म्वोश्चेति नत्वे, प्रशान् ।

## दिद्युद्दृद्ज्जगज्जुहूवाक्प्राट्धीश्रीश्रूस्तू-द्रुसूज्वायतस्तूकटप्रूपरिव्राड्भ्राजा-दयः क्विपः ॥ ४९ ॥

एते क्विबन्ता निपात्याः । तत्त्वप्राट् तत्त्वप्राशौ ।

## त्यदाद्यन्यसमानादुपमानाद्व्याप्ये दृशष्टक्सकौ च ॥ ५० ॥

एभ्य उपमानेभ्यो व्याप्येभ्यः परादृशेर्व्याप्य एव टक्सकौ क्विप् च स्युः ।

## अन्यत्यदादेराः ॥ ५१ ॥

अन्यस्य त्यदादेश्च दृगादावुत्तरपदे आः स्यात् ।

स्य इव दृश्यते इति त्यादृशः त्यादृशी। त्यादृक्षः त्यादृक्षी। त्यादृक्। एवमन्यादृशः। ईदृक्।

## दृग्दृशदृक्षे ॥ ५२ ॥

समानस्य सः स्यात्। सदृक् ६ सदृशः ६ ईदृशः ६ कीदृशः ६।

## इदंकिमीत् की ॥ ५३ ॥

दृगादावुत्तरपदे इदंकिमौ ईत्कीरूपौ स्याताम्। ईदृक् ३ कीदृक् ३।

## कर्तुर्णिन् ॥ ५४ ॥

कर्त्रर्थादुपमानात्परात्धातोर्णिन् स्यात्। उष्ट्रक्रोशी।

## अजातेः शीले ॥ ५५ ॥

अजातिवाचिनो नाम्नः परात्धातोः शीलेऽर्थे वर्तमानाण्णिन् स्यात्। उष्णभोजी। अजातेरिति किम्। शालीन् भोक्ता। (साधोस्तथा*) साधुकारी।

## ब्रह्मभ्रूणवृत्रात्क्विप् ॥ ५६ ॥

एभ्यस्त्रिभ्यः कर्मभ्यः पराद्भूतार्थाद्धन्तेः क्विप् स्यात्। ब्रह्म हतवान् ब्रह्महा।

## कृगः सुपुण्यपापकर्ममन्त्रपदात् ॥ ५७ ॥

सोः पुण्यादेः कर्मणश्च पराद्भूतार्थात्कृगः क्विप् स्यात्।

## ह्रस्वस्य तः पित्कृति ॥ ५८ ॥

ह्रस्वान्तस्य धातोः पिति कृति तोऽन्तः स्यात्। सुष्ठु कृतवान् सुकृत्।

## दृशः क्वनिप् ॥ ५९ ॥

व्याप्यात्पराद्भूतार्थाद्दृशः क्वनिप् स्यात्। बहुदृश्वा।

## णस्वराघोषाद्वनो रश्च ॥ ६० ॥

एतदन्ताद्विहितो यो वन् तदन्तात्स्त्रियां ङीः स्यात् तद्योगे नस्य रश्च। बहुदृश्वरी।

## सहराजभ्यां कृगयुधेः ॥ ६१ ॥

आभ्यां कर्मभ्यां पराद्भूतार्थात्कृगः क्वनिप् स्यात्। सहकृत्वा सहयुध्वा। राजकृत्वा राजयुध्वा।

## अनोर्जनेर्डः ॥ ६२ ॥

कर्मणः परादनुपूर्वाज्जनेर्भूतेऽर्थे वर्तमानात् डः स्यात्। आत्मानुजः।

## सप्तम्याः ॥ ६३ ॥

सप्तम्यन्तात्पराद्भूतेऽर्थे वर्तमानाज्जनेर्डः स्यात्। उपसरजः मन्दुरजः अप्सु जातं अब्जम् (पञ्चम्यास्तथा*) बुद्धिजः। (क्वचित् यथालक्ष्यं जनेर्डः स्यात्*)। अनुजः किञ्जः।

## क्तक्तवतू ॥ ६४ ॥

भूतार्थाद्धातोरेतौ स्याताम्। तत्र तत्साप्याना-

प्यात्कर्मभावे कृत्यक्तखलर्थाश्चेति वचनात् क्तः कर्मणि भावे च । क्रियते स्म कृतः कटश्चैत्रेण । स्थितं चैत्रेण । क्तवतुश्च कर्तरि । करोति स्म कृतवान् कटं चैत्रः । स्थितवांश्चैत्रः ।

## श्लिषशीङ्स्थासवसजनरुहजृभजेः क्तः ॥ ६५ ॥

एभ्यो नवभ्यः कर्तरि क्तो वा स्यात् । आश्लिष्टः कान्तां चैत्रः । आश्लिष्टा कान्ता चैत्रेण । अतिशयितो गुरुं शिष्यः । अतिशयितो गुरुः शिष्येण । उपस्थितो गुरुं शिष्यः । उपस्थितो गुरुः शिष्येण । उपासितो गुरुं सः । उपासितो गुरुस्तेन । अनूषितो गुरुं सः । अनूषितो गुरुस्तेन । अनुजातः तं सः । अनुजातः स तेन । आरूढोऽश्वं सः । आरूढोऽश्वस्तेन । अनुजीर्णस्तं सः । अनुजीर्णः स तेन । विभक्ताः स्वं ते । विभक्तं स्वं तैः ।

## आरम्भे ॥ ६६ ॥

आरम्भार्थाद्धातोः कर्तरि क्तो वा स्यात् । प्रकृताः कटं ते । प्रकृतः कटस्तैः ।

## गत्यर्थाऽकर्मकपिबभुजेः ॥ ६७ ॥

एभ्यः कर्तरि क्तो वा स्यात् । गतोऽसौ ग्रामं । गतो ग्रामस्तैः । आसितोऽसौ आसितं तैः । पीताः पयस्ते पीतं पयस्तैः । इदं भुक्तास्ते । इदं भुक्तं तैः ।

## ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः ॥६८॥

एभ्यः सदर्थेभ्यः क्तः स्यात्। राज्ञां ज्ञातः इष्टः पूजितः भिन्नः शीलितो रक्षितः।

## ॠल्वादेरेषां तो नोऽप्रः ॥ ६९ ॥

पृवर्जात् ॠदन्तात् ल्वादिभ्यश्च परेषां क्तिक्तक्तवतूनां तो नः स्यात्। तीर्णः तीर्णवान्। लूनः लूनवान्। अप्र इति किम्। पूर्तः पूर्तवान्।

## रदादमूर्छमदः क्तयोर्दस्य च ॥ ७० ॥

मूर्छमदवर्जाद्रदन्तात्परयोः क्तयोस्तस्य तद्योगे धातोर्दस्य च नः स्यात्। पूर्णः पूर्णवान्। भिन्नः भिन्नवान्।

## सूयत्याद्योदितः ॥ ७१ ॥

सूयत्यादिभ्यो नवभ्य ओदिद्भ्यश्च परयोः क्तयोस्तो नः स्यात्। सूनः सूनवान्। दूनः दूनवान्। लग्नः लग्नवान्।

## व्यञ्जनान्तस्थातोऽख्याध्यः ॥ ७२ ॥

व्यञ्जनात्परा याऽन्तस्था तदन्तस्य ख्याध्यावर्जस्य क्तयोस्तो नः स्यात्। स्त्यानः स्त्यानवान्। द्राणः २। ग्लानः २। अख्याध्य इति किम्। ख्यातः ध्यातः।

## क्षेः क्षी चाऽध्यार्थे ॥ ७३ ॥

क्षेस्तो नस्तद्योगे क्षेः क्षीश्च नतु घ्यार्थे । क्षीणः क्षीणवान् । अघ्यार्थे इति किम् । भावकर्मक्ते क्षितमस्य ।

## ऋह्रीघ्राध्रात्रोन्दनुदविन्तेर्वा ॥७४॥

एभ्योऽष्टाभ्यः क्तयोस्तोन्वा स्यात् । ऋणं ऋतम् । ह्रीणः ह्रीणवान् । ह्रीतः ह्रीतवान् ।

## क्षैशुषिपचो मकवम् ॥ ७५ ॥

एभ्यस्त्रिभ्यः क्तयोर्यथासङ्ख्यं मकवाः स्युः । क्षामः क्षामवान् । शुष्कः शुष्कवान् । पक्वः पक्ववान् । ( निर्वाणमवाते* ) निपातोऽयम् । निर्वाणो मुनिः । वाते तु कर्तरि । निर्वातो वातः । एवं क्षीवादयो निपाता ज्ञेयाः ।

## क्षुधवसस्तेषाम् ॥ ७६ ॥

आभ्यां परेषां क्तक्तवतुक्त्वामिट् स्यात् । क्षुधितः २ । उषितः २ ।

## लुभ्यञ्चेर्विमोहार्चे ॥ ७७ ॥

आभ्यां यथासङ्ख्यं विमोहनपूजार्थाभ्यां क्तक्तवतुक्त्वामिट् स्यात् । विलुभितः २ । अञ्चितः २ ।

## ऋवर्णश्र्यूर्णुगः कितः ॥ ७८ ॥

ऋवर्णान्तादेकस्वराद्धातोः श्रेरूर्णोश्च कित इट् न स्यात् । वृतः, श्रितः, ऊर्णुतः । एकस्वरादिति किम् । जागरितः ।

**ज्ञानेच्छार्चार्थञीच्छील्यादिभ्यः क्तः ॥६८॥**

एभ्यः सदर्थेभ्यः क्तः स्यात्। राज्ञां ज्ञातः इष्टः पूजितः भिन्नः शीलितो रक्षितः।

**ॠल्वादेरेषां तो नोऽप्रः ॥ ६९ ॥**

पूवर्जात् ॠदन्तात् ल्वादिभ्यश्च परेषां क्तिक्तक्तवतूनां तो नः स्यात्। तीर्णः तीर्णवान्। लूनः लूनवान्। अप्र इति किम्। पूर्तः पूर्तवान्।

**रदादमूर्छमदः क्तयोर्दस्य च ॥ ७० ॥**

मूर्छमदवर्जाद्रदन्तात्परयोः क्तयोस्तस्य तद्योगे धातोर्दस्य च नः स्यात्। पूर्णः पूर्णवान्। भिन्नः भिन्नवान्।

**सूयत्याद्योदितः ॥ ७१ ॥**

सूयत्यादिभ्यो नवभ्य ओदिद्भ्यश्च परयोः क्तयोस्तो नः स्यात्। सूनः सूनवान्। दूनः दूनवान्। लग्नः लग्नवान्।

**व्यञ्जनान्तस्थातोऽख्याध्यः ॥ ७२ ॥**

व्यञ्जनात्परा याऽन्तस्था तदन्तस्य ख्याध्यावर्जस्य क्तयोस्तो नः स्यात्। स्त्यानः स्त्यानवान्। द्राणः २। ग्लानः २। अख्याध्य इति किम्। ख्यातः ध्यातः।

**क्षेः क्षी चाऽध्यार्थे ॥ ७३ ॥**

क्षेस्तो नस्तद्योगे क्षेः क्षीश्च नतु ध्यार्थे । क्षीणः क्षीणवान् । अध्यार्थे इति किम् । भावकर्मक्ते क्षितमस्य ।

## ऋह्रीघ्राध्रात्रोन्दनुदविन्तेर्वा ॥७४॥

एभ्योऽष्टाभ्यः क्तयोस्तोन्वा स्यात् । ऋणं ऋतम् । ह्रीणः ह्रीणवान् । ह्रीतः ह्रीतवान् ।

## क्षैशुषिपचो मकवम् ॥ ७५ ॥

एभ्यस्त्रिभ्यः क्तयोर्यथासङ्ख्यं मकवाः स्युः । क्षामः क्षामवान् । शुष्कः शुष्कवान् । पक्वः पक्ववान् । ( निर्वाणमवाते* ) निपातोऽयम् । निर्वाणो मुनिः । वाते तु कर्तरि । निर्वातो वातः । एवं क्षीबादयो निपाता ज्ञेयाः ।

## क्षुधवसस्तेषाम् ॥ ७६ ॥

आभ्यां परेषां क्तक्तवतुक्त्वामिट् स्यात् । क्षुधितः २ । उषितः २ ।

## लुभ्यञ्चेर्विमोहार्चे ॥ ७७ ॥

आभ्यां यथासङ्ख्यं विमोहनपूजार्थाभ्यां क्तक्तवतुक्त्वामिट् स्यात् । विलुभितः २ । अञ्चितः २ ।

## ऋवर्णश्र्यूर्णुगः कितः ॥ ७८ ॥

ऋवर्णान्तादेकस्वराद्धातोः श्रेरूर्णोश्च कित इट् न स्यात् । घृतः, श्रितः, ऊर्णुतः । एकस्वरादिति किम् । जागरितः ।

## उवर्णात् ॥ ७९ ॥

उवर्णान्तादेकस्वराद्धातोर्विहितस्य कित इट् न भवति । युतः २ । भूतः २ ।

## पूङ्क्लिशिभ्यो नवा ॥ ८० ॥

पूङ्क्लिशिभ्यां च क्तक्तवतुक्त्वामिट् वा स्यात् । पूतः २ पवितः २ । क्लिष्टः २ क्लिशितः २ ।

## डीयश्व्यैदितः क्तयोः ॥ ८१ ॥

दिवादिकस्य डीयतेः श्वेरैदिद्भ्यश्च धातुभ्यः परयोः क्तक्तवत्वोरिट् न स्यात् । त्रस्तः २ । डीनः २ । श्वितः २ । लग्नः २ ।

## वेटोऽपतः ॥ ८२ ॥

पतिवर्जनात्क्वचिद्विकल्पेटो धातोरेकस्वरात्परयोः क्तयोरिट् न स्यात् । नशौच् नाशे, नष्टः २ । अपत इति किम् । पतितः ।

## न डीङ्शीङ्पूङ्धृषिक्ष्विदिस्विदिमिदः ८३

एभ्यः सप्तभ्यः परौ सेटौ क्तौ किद्वन्न स्याताम् । डयितः २ । शयितः २ । पवितः २ । डीङ् भूवादिकः ।

## उति शवर्हादिभ्यः क्तौ भावारम्भे ॥ ८४ ॥

उत्युपान्त्ये सति शवर्हेभ्योऽदादिभ्यश्च परौ भावारम्भे क्तक्तवतू सेटौ वा किद्वत्स्याताम् । रुदितं रोदितमेभिः । प्रद्युतितः २ प्रद्योतितः २ । प्ररु-

दितः २ प्ररोदितः २ । शवर्हाद्यः इति किम् । प्रगुंधितः इत्यादि ।

आदितः ॥ ८५ ॥

आदितो धातोः परयोः क्तयोरिड् न स्यात् । मिन्नः २ ।

नवाऽनयोः ॥ ८६ ॥

भावारम्भयोः क्ते तु वा । मिन्नं मेदितम् २ ।

श्वसजपवमरुषत्वरसंघुषास्वनामः ॥ ८७ ॥

एषामष्टानां क्तयोरिड्वा स्यात् । श्वस्तः २ श्वसितः २ । जप्तः २ जपितः २ । अहन्पञ्चमस्येति दीर्घे, वान्तः २ वमितः २ । रुष्टः २ रुषितः २ । तूर्णः २ त्वरितः २ । संघुष्टः २ संघुषितः २ । आस्वान्तः २ आस्वनितः २ । अभ्यान्तः । अभ्यमितः २ ।

आः खनिसनिजनः ॥ ८८ ॥

खातः २ । सातः २ । जातः २ ।

णौ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्तम् ॥ ८९ ॥

एते णौ क्तान्ता वा निपात्यन्ते । दान्तः २ दमितः २ । शान्तः २ शमितः २ । पूर्णः २ पू-

---

१ गुधन् परिवेष्टने इति धातो रूपम् ।

रितः २ । दस्तः २ दासितः २ । स्पष्टः २ स्पशितः २ । छन्नः २ छादितः २ । ज्ञप्तः २ ज्ञापितः २ ।

## सेट्क्तयोः ॥ ९० ॥

सेट्क्तयोः परयोर्णेर्लुक् स्यात् । कारितः २ । गणितः गणितवान् । (स्फायः स्फी वा*) स्फीतः २ स्फातः २ ।

## क्तयोरनुपसर्गस्य ॥ ९१ ॥

अनुपसर्गस्य प्यायः क्तयोः पीः स्यात् । पीनम् २ पीनवन्मुखम् । अनुपसर्गस्येति किम् । प्रप्यानो मेघः ।

## प्राद्दागस्त्त आरम्भे क्ते ॥ ९२ ॥

आरम्भार्थस्य प्रपूर्वस्य दागः क्ते परे त्त् वा स्यात् । प्रदातुमारब्धः प्रत्तः । पक्षे दत् आदेशः । प्रदत्तः ।

## निविस्वन्ववात् ॥ ९३ ॥

एभ्यो दागः क्ते त्तो वा स्यात् ।

## दत्ति ॥ ९४ ॥

दो यस्तादिरादेशस्तस्मिन् परे नाम्यन्तस्योपसर्गस्य दीर्घः स्यात् । नीत्तं २ निदत्तम् २ । वीत्तं विदत्तम् । सूत्तं सुदत्तम् । अनूत्तं अनुदत्तम् । अवत्तं अवदत्तम् ।

## स्वरादुपसर्गाद्दस्तिकित्यधः ॥ ९५ ॥

स्वरान्तादुपसर्गात्परस्य धावर्जस्य दासंज्ञकस्य तादौ किति त्त् नित्यं स्यात् । प्रत्तः ।

दत् ॥ ९६ ॥

अधो दासंज्ञस्य तादौ किति दत् स्यात् । दत्तः ।

दोसोमास्थ इः ॥ ९७ ॥

एषां तादौ किति इः स्यात् । निर्दितः २ । सितः २ । मितः २ । स्थितः २ ।

छाशोर्वा ॥ ९८ ॥

छा शा इत्येतयोस्तादौ किति प्रत्यये इः स्यात् । अवच्छितः अवच्छातः । निशितः निशातः ।

धागः ॥ ९९ ॥

तादौ किति हिः स्यात् । विहितः २ । पिहितः २ ।

वाऽवाप्योस्तनिक्रीधागहोर्वपी ॥ १०० ॥

अवस्योपसर्गस्य तनिक्रीणात्योः परयोरपिशब्दस्य धाग्रहोः परयोर्यथासङ्ख्यं वपी इत्यादेशौ वा स्याताम् । अवतंसः वतंसः । अवक्रयः वक्रयः । अपिधानं पिधानम् । अपिनद्धं पिनद्धम् ।

यपि चाऽदो जग्धः ॥ १०१ ॥

तादौ किति यपि चादो जग्ध् स्यात् । जग्धः । यजादिवचेरिति य्वृति, इष्टं उप्तं ऊढं उक्तं उषितं आहूतः ऊतः सुप्तः ।

**तत्र क्वसुकानौ तद्वत् ॥ १०२ ॥**

परोक्षायां विषये धातोः क्वसुकानौ स्यातां तौ च परोक्षावत् । चकृवान् चक्राणः ।

**घसेकस्वरातः क्वसोः ॥ १०३ ॥**

घसेरेकस्वरादादन्ताच्च धातोः परस्य क्वसोरिट् स्यात् । जक्षिवान् । आदिवान् । ययिवान् । पेचिवान् । पेचानः ।

**गमहनविद्लृविशदृशो वा ॥ १०४ ॥**

एषां पञ्चानां क्वसोरिड्वा स्यात् । जग्मिवान् । जगन्वान् । जघ्निवान् जघन्वान् । विविदिवान् विविद्वान् । विविशिवान् विविश्वान् । ददृशिवान् ददृश्वान् ।

**शत्रानशावेष्यति तु सस्यौ ॥ १०५ ॥**

वर्तमाने धातोः शत्रानशौ स्याताम् । भविष्यत्काले तु तौ सस्यौ । यान् । शयानः । यास्यन् ।

**अतो म आने ॥ १०६ ॥**

धातोर्विहिते आनेऽतो मोऽन्तः स्यात् । शयिष्यमाणः । आसीनः । निपातोऽयम् ।

**अवर्णान्तादश्नोऽन्तो वाऽतुरीङ्योः ॥१०७॥**

श्नावर्जादवर्णात्परस्य अतुरीङ्योः परयोरन्त वा स्यात् । तुदती तुदन्ती । भाती भान्ती । (श्यात्छनश्च नित्यं*) दीव्यन्ती । पचन्ती ।

## तौ माङ्याक्रोशेषु ॥ १०८ ॥

माङ्युपपदे आक्रोशे गम्ये तौ शत्रानशौ स्याताम् । मापचन् जाल्मो ज्ञास्यति । मापचमानः । (वा वेत्तेः क्वसुर्वर्तमाने*) तत्त्वं विद्वान् विदन् ।

## वयःशक्तिशीले ॥ १०९ ॥

एषु गम्येषु सत्यर्थे वर्तमानाद्धातोः शानः स्यात् । वयः कतीह शिखण्डं वहमानाः । शक्तिः कतीह स्त्रियं गच्छमानाः । शीलं कतीह परान् निन्दमानाः ।

## धारीङोऽकृच्छ्रेऽतृश् ॥ ११० ॥

सुखसाध्येऽर्थे वर्तमानयोरनयोरतृश् स्यात् । धारयन्नाचारागमम् । अधीयंस्तत्त्वार्थम् ।

## तृन् शीलधर्मसाधुषु ॥ १११ ॥

शीलादिषु सदर्थाद्धातोस्तृन् स्यात् । कर्ता कटं । शीलादिसदर्थोऽधिकारसमाप्तिं यावदनुवर्तते ।

## भ्राज्यलंकृग्निराकृग्भूसहिरुचिवृ-तिवृधिचरिप्रजनापत्रपइष्णुः ॥ ११२ ॥

एभ्य एकादशभ्य इष्णुः स्यात् । भ्राजते इत्येवंशीलो भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । भविष्णुः । सहिष्णुः । रोचिष्णुः । वर्तिष्णुः । वर्धिष्णुः । चरिष्णुः । प्रजनिष्णुः । अपत्रपिष्णुः ।

## उदः पचिपतिपदिमदेः ॥ ११३ ॥

उत्पूर्वेभ्य एभ्य इष्णुः स्यात् । उत्पचिष्णुः । (भूजेः ष्णुक्*) भूष्णुः जिष्णुः । (स्थाग्लाम्लापचिपरिमृजिक्षेः स्नुः*) स्थास्नुः । ग्लास्नुः म्लास्नुः । पक्ष्णुः । परिमार्क्ष्णुः । क्षेष्णुः । (त्रसिगृधिधृषिक्षिपः क्नुः*) त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

## सन्भिक्षाशंसेरुः ॥ ११४ ॥

सन्नन्ताद्भिक्षाशंसिभ्यां च उः स्यात् । लिप्सुः । भिक्षुः । आशंसुः । (शृवन्देरारुः*) विशरारुः । वन्दारुः । (शीङ्श्रद्धानिद्रातन्द्रादयिपतिगृहिस्पृहेरालुः*) शयालुः । आमन्तात्त्वाय्येत्स्वयादेशे, पतयालुः । स्पृहयालुः ।

## डो सासहिवावहिचाचलिपापतिसस्रिचक्रिदधिजज्ञिनेमि ॥ ११५ ॥

एते डयन्ता निपाताः । (शृकमगमहनवृषभूस्थ उकण्*) (लषपतपदस्तथा*) शारुकः कामुकः । अभिलाषुकः ।

## द्रमक्रमो यङः ॥ ११६ ॥

यङन्ताभ्यामाभ्यामनः स्यात् । दन्द्रमणः । चङ्क्रमणः ।

## यजिजपिदंशिवदाद्वूकः ॥ ११७ ॥

यङन्तेभ्य एभ्यश्चतुर्भ्य ऊकः स्यात् । यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकः ।

जागुः ॥ ११८ ॥

तस्मादुकः स्यात् । जागरुकः । ( शमष्टकाद्युजादिभ्यश्च घिनण् वक्तव्यः * )

क्तेऽनिटश्चजोः कगौ घिति ॥११९॥

क्तेऽनिटो धातोश्चजोर्घिति प्रत्यये परे कगौ स्याताम् । शमी । योगी । भोगी । क्ते इति किम् । अर्च्यः ।

वृद्भिक्षिलुण्टिजल्पिकुट्टाट्टाकः ॥१२०॥

स्पष्टम् । वराकः । भिक्षाकः ।

सृघस्यदो मरक् ॥ १२१ ॥

सृमरः । घस्मरः । अद्मरः ।

भञ्जिभासिमिदो घुरः ॥ १२२ ॥

भङ्गुरम् । भासुरम् । मेदुरम् ।

वेत्तिच्छिदभिदः कित् घुरः ॥ १२३ ॥

विदुरः । छिदुरः । भिदुरः ।

भियोरुरुकलुकम् ॥ १२४ ॥

भीरुः । भीरुकः । भीलुकः ।

सृजीण्नशष्ट्वरप् ॥ १२५ ॥

एभ्यः कित् ट्वरप् स्यात् । प्रसृत्वरः । जित्वरः । इत्वरः । नश्वरः । गत्वरः निपातोऽयम् ।

**स्म्यजसहिंसदीपकम्पकमनमो रः ॥ १२६ ॥**

एभ्यः सप्तभ्यो रः स्यात्। स्मेरः। अजस्रं। हिंस्रः। दीप्रः। कम्प्रः। कम्रः। नम्रः।

**तृपिधृषिस्वपो नजिङ् ॥ १२७ ॥**

एभ्यो नजिङ् प्रत्ययः स्यात्। तृष्णक्। धृष्णक्। स्वप्नक्।

**स्थेशभासपिसकसो वरः ॥ १२८ ॥**

स्पष्टम्। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। विकस्वरः।

**शंसंस्वयंविप्राद्भुवो डुः ॥ १२९ ॥**

एभ्यः पराद्भुवो डुः स्यात्। शम्भुः। सम्भुः। स्वयम्भुः। विभुः। प्रभुः।

इति शीलाद्यर्थाधिकारः।

**उणादयः ॥ १३० ॥**

सदर्थाद्धातोरुणादयो बहुलं स्युः। कारुः। वायुः।

**क्रियायां क्रियार्थायां तुम्णकच् भविष्यन्ती ॥ १३१ ॥**

यस्माद्धातोस्तुमादिविधिस्तद्वाच्या क्रियाऽर्थः प्रयोजनं यस्यास्तस्यां क्रियायामुपपदे सतस्तदर्थाद्धातोस्तुमादयः स्युः। कर्तुम् कारकः करिष्यामीति याति।

## तुमश्च मनः कामे ॥ १३२ ॥

तुमसमोर्मनसि कामे च परे म्लुप् स्यात् । भोक्तुमना गन्तुकामः ।

## क्त्वातुमम् भावे ॥ १३३ ॥

एते धात्वर्थमात्रे स्युः ।

## शकधृषज्ञारभलभसहार्हग्लाघटास्तिसमर्थार्थे च तुम् ॥ १३४ ॥

शक्याद्यर्थेषु इच्छार्थेषु च धातुषु समर्थार्थेषु च नामसूपपदेषु कर्मभूताद्धातोस्तुम् स्यात् । शक्नोति पारयति वा भोक्तुम् । इच्छति पठितुम् । समर्थो ग्रहीतुम् ।

## कालवेलासमये तुम्वावसरे ॥ १३५ ॥

एषु त्रिषूपपदेष्ववसरे गम्ये धातोस्तुम्वा स्यात् । कालो भोक्तुम् । वेला भोक्तुम् । समयो भोक्तुम् । पक्षे कालो भोजनस्य ।

## पदरुजविशस्पृशो घञ् ॥ १३६ ॥

एभ्यश्चतुर्भ्यो घञ् । पद्यतेऽपादि पेदे वा पादः । एवं रोगः, वेशः, स्पर्शः ।

## भावाऽकर्त्रोः ॥ १३७ ॥

भावे कर्तृवर्जिते च कारके धातोर्घञ् स्यात् । पाकः । त्यागः । दायः । आयः । भावः ।

## भूश्यदोऽल् ॥ १३८ ॥

एभ्यः सोपसर्गेभ्यो भावाऽकर्त्रोरल् स्यात् । प्रभवः । संश्रयः । विघसः ।

## युवर्णवृदृवशरणगमृद्ग्रहः ॥ १३९ ॥

इवर्णोवर्णान्तेभ्यो वृादेर्ऋदन्तेभ्यो ग्रहेश्च भावाकर्त्रोरल् स्यात् । चयः । क्रयः । रवः । लवः । वरः । आदरः । वर्षादयः क्लीबेऽलन्ता निपाताः । संमदप्रमदौ हर्षे निपातावित्यादि । निघादयोऽप्येवम् ।

## मूर्त्तिनिचिताऽभ्रे घनः ॥ १४० ॥

मूर्तिः काठिन्यम् निचितं निरन्तरम् अभ्रा मेघाः एष्वर्थेषु हन्तेरल् घनादेशश्च । दधिघनाः केशाः । घनो मेघः ।

## वेरशब्दे प्रथने ॥ १४१ ॥

वेः परात् स्तृणातेरशब्दविषये विस्तीर्णत्वे घञ् स्यात् । विस्तारः पटस्य । शब्दे तु विस्तरः ।

## ट्वितोऽथुः ॥ १४२ ॥

ट्वितो धातोर्भावाकर्त्रोरथुः स्यात् । वेपथुः । वमथुः ।

## ड्वितस्त्रिमक् तत्कृतम् ॥ १४३ ॥

ड्वितो धातोर्भावाकर्त्रोस्त्रिमक् तेन कृतमित्यर्थे । पाकेन कृतं पक्त्रिमम् । कृत्रिमम् । दागस्तादेशे, परीत्रिमम् ।

## यजिस्वपिरक्षियतिप्रच्छो नः ॥ १४४ ॥

एभ्यो भावाकर्त्रोर्नः स्यात् । यज्ञः । स्वप्नः । रक्ष्णः । यत्नः । प्रश्नः ।

## उपसर्गाद्दः किः ॥ १४५ ॥

सोपसर्गाद्दासंज्ञात्किः स्यात् । आदिः । निधिः ।

## व्याप्यादाधारे ॥ १४६ ॥

व्याप्यपूर्वाद्दासंज्ञादाधारे किः स्यात् । जलधिः । अन्तर्धिः ।

## स्त्रियां क्तिः ॥ १४७ ॥

भावाकर्त्रोः स्त्रियां क्तिः स्यात् । कृतिः । ऋ-ल्वादेरिति नत्वे लूनिः । घपि चेति जग्धादेशे जग्धिः ।

## सातिहेतियूतिजूतिज्ञप्तिकीर्त्ति ॥ १४८ ॥

एते भावाकर्त्रोः स्त्रियां निपात्याः । ( गापाधा-स्थोरीत्वं भावे * ) । गीतिः पीतिः । (स्थो वा * ) । स्थितिः आस्था ।

## आस्यटिव्रज्यजः क्यप् ॥ १४९ ॥

एभ्यो भावे स्त्रियां क्यप् स्यात् । आस्या । अट्या । व्रज्या । इज्या ।

## कृगः श च वा ॥ १५० ॥

कृगो भावाकर्त्रोः शः क्यप् च वा स्याताम् । क्रिया कृत्या कृतिः ।

भूश्र्यदोऽल् ॥ १३८ ॥

एभ्यः सोपसर्गेभ्यो भावाऽकर्त्रोरल् स्यात् । प्रभवः । संश्रयः । विघसः ।

युवर्णवृदृवशरणगमृद्ग्रहः ॥ १३९ ॥

इवर्णोवर्णान्तेभ्यो वृादेरृदन्तेभ्यो ग्रहेश्च भावाकर्त्रोरल् स्यात् । चयः । क्रयः । रवः । लवः । वरः । आदरः । वर्षादयः क्लीबेऽलन्ता निपाताः । संमदप्रमदौ हर्षे निपातावित्यादि । निघादयोऽप्येवम् ।

मूर्त्तिनिचिताऽभ्रे घनः ॥ १४० ॥

मूर्तिः काठिन्यम् निचितं निरन्तरम् अभ्रा मेघाः एष्वर्थेषु हन्तेरल् घनादेशश्च । दधिघनाः केशाः । घनो मेघः ।

वेरशब्दे प्रथने ॥ १४१ ॥

वेः परात् स्तृणातेरशब्दविषये विस्तीर्णत्वे घञ् स्यात् । विस्तारः पटस्य । शब्दे तु विस्तरः ।

ट्वितोऽथुः ॥ १४२ ॥

ट्वितो धातोर्भावाकर्त्रोरथुः स्यात् । वेपथुः । वमथुः ।

ड्वितस्त्रिमक् तत्कृतम् ॥ १४३ ॥

ड्वितो धातोर्भावाकर्त्रोस्त्रिमक् तेन कृतमित्यर्थे । पाकेन कृतं पक्त्रिमम् । कृत्रिमम् । दागस्तादेशो, परीत्रिमम् ।

## यजिस्वपिरक्षियतिप्रच्छो नः ॥ १४४ ॥

एभ्यो भावाकर्त्रोर्नः स्यात् । यज्ञः । स्वप्नः । रक्ष्णः । यत्नः । प्रश्नः ।

## उपसर्गाद्दः किः ॥ १४५ ॥

सोपसर्गाद्दासंज्ञात्किः स्यात् । आदिः । निधिः ।

## व्याप्यादाधारे ॥ १४६ ॥

व्याप्यपूर्वाद्दासंज्ञादाधारे किः स्यात् । जलधिः । अन्तर्धिः ।

## स्त्रियां क्तिः ॥ १४७ ॥

भावाकर्त्रोः स्त्रियां क्तिः स्यात् । कृतिः । ऋल्वादेरिति नत्वे लूनिः । यपि चेति जग्धादेशे जग्धिः ।

## सातिहेतियूतिजूतिज्ञप्तिकीर्त्ति ॥ १४८ ॥

एते भावाकर्त्रोः स्त्रियां निपात्याः । ( गापाधात्वोरीत्वं भावे * ) । गीतिः पीतिः । ( स्थो वा* ) । स्थितिः आस्था ।

## आस्यटिव्रज्यजः क्यप् ॥ १४९ ॥

एभ्यो भावे स्त्रियां क्यप् स्यात् । आस्या । अट्या । व्रज्या । इज्या ।

## कृगः श च वा ॥ १५० ॥

कृगो भावाकर्त्रोः शः क्यप् च वा स्याताम् । क्रिया कृत्या कृतिः ।

मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धान्तर्द्धा ॥ १५१ ॥

एते स्त्रियां निपात्याः ।

परेः सृचरेर्यः ॥ १५२ ॥

आभ्यां परिपूर्वाभ्यां यः स्यात् । परिसर्या परिचर्या ।

वाऽटाट्यात् ॥ १५३ ॥

अटेर्यङन्ताद्वा यः । अटाट्या अटाटा । (जागुरश्च*) जागर्या जागरा । (शंसिप्रत्ययात्*) आशंसा । गोपाया । चिकीर्षा । (क्तेटो गुरोर्व्यञ्जनादः स्यात्*) ईहा ऊहा ।

पितोऽङ् ॥ १५४ ॥

पिद्भ्यो धातुभ्यो भावाकर्त्रोः स्त्रियामङ् स्यात् । पचा ।

भिदादयः ॥ १५५ ॥

एते भावाकर्त्रोः स्त्रियामङन्ता निपात्याः । भिदा । छिदा ।

क्रुत्संपदादिभ्यः क्विप् ॥ १५६ ॥

क्रुध् । संपद् (भ्यादिभ्यो वा*) भीः भीतिः ।

नञोऽनिः शापे ॥ १५७ ॥

नञ्पूर्वाद्धातोः शापे गम्ये भावाकर्त्रोः स्त्रियामनिः स्यात् । अजननिस्ते भूयात् ।

## ग्लाहाज्यः ॥ १५८ ॥

एभ्यो निः स्यात् । ग्लानिः । हानिः । ज्यानिः ।

## पर्यायार्हणोत्पत्तौ च णकः ॥ १५९ ॥

सद्दम् । भवत आसिका । इक्षुभक्षिका ।

## भावे ॥ १६० ॥

धात्वर्थनिर्देशे स्त्रियां धातोर्णकः स्यात् । शायिका ।

इति भावे स्त्रीप्रत्यया ।

## क्लीबे क्तः ॥ १६१ ॥

नपुंसके भावे क्तः स्यात् । तव हसितम् ।

## अनट् क्लीबे ॥ १६२ ॥

भावेऽर्थे धातोरनट् स्यात् । गमनम् ।

## करणाधारे ॥ १६३ ॥

अनयोरर्थयोर्धातोरनट् स्यात् । एपणी सक्तुधानी । (रम्यादिभ्यः कर्तरि अनट्*) रमणी । क्वचिदनप्रत्ययसंबन्धिनो नकारस्य यथायोगं णत्वं वक्तव्यम् । प्रेह्णणम् प्रेङ्खणम् ।

## पुन्नाम्नि घः ॥ १६४ ॥

धातोः करणाधारयोर्घः स्यात् पुंसि । दन्तच्छदः । एकोपसर्गस्य च घे इति ह्रस्वः । आकरः ।

( व्यञ्जनाद्घञ्* ) घस्यापवादः । लेखः । रागः । ( अवात्तृस्तृभ्याम्* ) अवतारः अवस्तारः । ( उदङ्कस्तोये* ) ( आनायो जाले* ) ।

**गोचरसंचरवहव्रजव्यजखलापणनिगमवकभगकपाकपनिकपम् ॥ १६५ ॥**

**न्यायावायाध्यायोद्यावसंहारावहाराधारदारजारम् ॥ १६६ ॥**

एते घञन्ता निपात्याः ।

**इकिस्तिव् स्वरूपार्थे ॥ १६७ ॥**

धातोः स्वरूपेऽर्थे च वाच्ये एते स्युः । भञ्जिः क्रुधिः वेत्तिः भुजि क्रियते पचतिः परिवृत्तः ।

**दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात्खल् ॥ १६८ ॥**

कृच्छ्रार्थाद्दुरोऽकृच्छ्रार्थाभ्यां स्वीषद्भ्यां च पराद्धातोः खल् स्यात् । दुःशयं त्वया । दुःकरः कटः। सुशयं सुकरः । ईषच्छयं ईषत्करः ।

**शासियुधिदृशिधृषिमृषातोऽनः ॥ १६९ ॥**

कृच्छ्राकृच्छ्रार्थदुःस्वीषत्पूर्वेभ्य एभ्य आदन्ताच्च धातोरनः स्यात् । दुःशासनः सुशासनः ईषच्छासनः ३ । दुर्योधनः ३ । दुर्दर्शनः ३ । दुर्धर्षणः ३ । दुर्मर्षणः ३ दुरत्थानम् ३ ।

## प्राक्काले ॥ १७० ॥

परकालेन धात्वर्थेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानाद्धातोः *संबन्धे क्त्वा वा स्यात् । आ-*सित्वा भुङ्क्ते । हाको हिः क्त्विः । हित्वा । उवर्णा-दितीड्निषेधे भूत्वा । ईर्व्यञ्जनेऽयपीति । पीत्वा गीत्वा । यपि तु निपाय ।

## जॄव्रश्चः क्त्वः ॥ १७१ ॥

आभ्यां परस्य क्त्व इट् स्यात् । जरित्वा २ व्रश्चित्वा । ऊदितो वा इट्, दान्त्वा दमित्वा । क्षुधवसेपामितीटि, क्षुधित्वा उषित्वा । लुभ्यञ्चे-रिति, लुभित्वा अञ्चित्वा । पूङ्क्लिशिभ्यो नवेटि वेट्, पूत्वा पवित्वा । क्लिष्ट्वा क्लिशित्वा ।

## क्त्वा धातोः ॥ १७२ ॥

धातोः क्त्वा सेट् किद्वन्न स्यात् । देवित्वा ।

## स्कन्दस्यन्दः ॥ १७३ ॥

आभ्यां क्त्वा किद्वन्न स्यात् । स्कंत्वा स्यंत्वा ।

## क्षुधक्लिशकुषगुधमृडमृदवदवसः ॥ १७४ ॥

एषामष्टानां सेट् क्त्वा कित्स्यात् । क्षुधवस इतीटि क्षुधित्वा उदित्वा उषित्वा । रुदविदेति क्त्वः कित्त्वे, रुदित्वा मुषित्वा गृहीत्वा सुप्त्वा

पृष्ट्वा । वौव्यञ्जनादेरिति वा कित्त्वे, द्युतित्वा द्योतित्वा ।

## जनशोन्युपान्त्ये तादिः क्त्वा ॥ १७५॥

जन्तान्नशेश्च न्युपान्त्ये सति तादिः क्त्वा किद्वा स्यात् । रक्त्वा रङ्क्त्वा । नष्ट्वा नंष्ट्वा ।

## ऋतृषमृषकृशवञ्चलुञ्चथफः सेट् ॥ १७६ ॥

यथासंभवं न्युपान्त्ये सत्येभ्यः सेट् क्त्वा किद्वा स्यात् । ऋतित्वा अर्तित्वा तृषित्वा तर्षित्वा मृषित्वा मर्षित्वा कृशित्वा कर्शित्वा वचित्वा वञ्चित्वा लुचित्वा लुञ्चित्वा श्लथित्वा श्लन्थित्वा ग्रथित्वा ग्रन्थित्वा गुफित्वा गुम्फित्वा ।

## अनञः क्त्वो यप् ॥ १७७ ॥

नञ्वर्जोऽपूर्वपदावयवं यदुत्तरपदं तदवयवस्य क्त्वो यप् स्यात् । प्रकृत्य प्रदाय । अनञ इति किम् । अकृत्वा ।

## लघोर्यपि ॥ १७८ ॥

लघोः परस्य णेर्यप्यय् स्यात् । प्रशमय्य ।

## वाऽऽप्नोः १७९ ॥

आप्नोतेः परस्य णेर्यप्यय्वा स्यात् । प्रापय्य

प्राप्य । ( मेङो वा मित् यपि* ) अपमित्य अपमाय । ( क्षेः क्षी* ) प्रक्षीय । ( यपि चादो जग्धृ* ) प्रजग्ध्य ।

यपि ॥ १८० ॥

यम्यादीनां यपि लुक् स्यात् । प्रहत्य ।

वाऽमः ॥ १८१ ॥

यम्यादीनाममन्तानां यपि वा लुक् । प्रयत्य प्रयम्य ।

निमील्यादिमेङस्तुल्यकर्तृके ॥ १८२ ॥

तुल्यो धात्वर्थान्तरेण कर्ता यस्य तद्वृत्तिभ्यो निमील्यादिभ्यो मेङश्च धातोः संबन्धे क्त्वा वा स्यात् । अक्षिणी निमील्य हसति । मुखं व्यादाय स्वपिति । अपमित्य याचते । अपमातुं प्रतिदातुं याचते इत्यर्थः ।

निषेधेऽलंखल्वोः क्त्वा ॥ १८३ ॥

निषेधार्थयोरलंखल्वोरुपपदयोर्धातोः क्त्वा स्यात् । अलंकृत्वा खलुकृत्वा ।

परावरे ॥ १८४ ॥

अस्मिन् गम्ये क्त्वा वा स्यात् । अतीत्य अमाप्य नदीं गिरिः ।

## ख्णम् चाभीक्ष्ण्ये ॥ १८५ ॥

आभीक्ष्ण्ये परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे धातोः ख्णम् क्त्वा च स्यात्। भोजं भोजं याति। भुक्त्वा भुक्त्वा व्रजति । घटादेरिति वा दीर्घे, घाटं २ घटं २। आभीक्ष्ण्यव्यक्तये द्विर्वचनम्।

## अन्यथैवंकथमित्थमः कृगोऽनर्थकात् ॥ १८६ ॥

एभ्यश्चतुर्भ्यः परात्तुल्यकर्तृकात् कृगोऽनर्थकाद्धातोः संबन्धे ख्णम् वा स्यात् । अन्यथाकारं एवंकारं कथङ्कारं इत्थंकारं भुङ्क्ते ।

## स्वाद्वर्थाददीर्घात् ॥ १८७ ॥

स्वाद्वर्थाददीर्घान्तात् व्याप्यात्परस्मात्तुल्यकर्तृकात्कृगो धातोः संबन्धे ख्णम् वा स्यात्। स्वादुङ्कारं मृष्टङ्कारं भुङ्क्ते। पक्षे स्वादुं कृत्वा ( विदृदृग्भ्यः कार्त्स्न्ये णम्*) अतिथिवेदं भोजयति। कन्यादर्शं वरयति।

## व्याप्याच्चेवात् ॥ १८८ ॥

व्याप्यात्कर्तुश्चोपमानात्पराद्धातोस्तस्यैव संबन्धे णम्वा स्यात्। सुवर्णनिधायं निहितः। काकनाशं नष्टः। एवं यावज्जीवमधीते। शुष्कपेषं पिनष्टि।

जीवग्राहं गृह्णाति इत्यादयोऽपि यथायोगं णमुप्रत्ययान्ता ज्ञेयाः ।

इति क्त्वादिप्रत्ययाधिकारः ।

---

अथ भावकर्मणोः पञ्च कृत्यप्रत्ययाः ।

ऋवर्णव्यञ्जनाद् घ्यण् ॥ १८९ ॥

ऋवर्णान्ताद्व्यञ्जनान्ताच्च धातोर्घ्यण् स्यात् । कार्यम् ।

वचोऽशब्दनाम्नि ॥ १९० ॥

अशब्दसंज्ञायां वचेर्घ्यणि को न स्यात् । वाच्यम् । शब्दसंज्ञायां तु वाक्यम् ।

निप्राद्युजः शक्ये ॥ १९१ ॥

आभ्यां युजः शक्ये गम्ये घ्यणि गो न स्यात् । नियोज्यः प्रयोज्यः । शक्य इति किम् । नियोग्यः ।

भुजो भक्ष्ये ॥ १९२ ॥

भक्ष्येऽर्थे भुजो घ्यणि गो न स्यात् । भोज्यं पयः । अभक्ष्ये तु भोग्या भूः ।

त्यज्यजप्रवचः ॥ १९३ ॥

एषां घ्यणि कगौ न स्याताम् । त्याज्यं याज्यं प्रवाच्यः ।

## रूणम् चाभीक्ष्ण्ये ॥ १८५ ॥

आभीक्ष्ण्ये परकालेन तुल्यकर्तृके प्राक्कालेऽर्थे धातोः रूणम् क्त्वा च स्यात्। भोजं भोजं याति। भुक्त्वा भुक्त्वा व्रजति । घटादेरिति वा दीर्घे, घाटं २ घटं २। आभीक्ष्ण्यव्यक्तये द्विर्वचनम्।

## अन्यथैवंकथमित्थमः कृगोऽनर्थकात् ॥ १८६ ॥

एभ्यश्चतुर्भ्यः परात्तुल्यकर्तृकात् कृगोऽनर्थकाद्धातोः संबन्धे रूणम् वा स्यात् । अन्यथाकारं एवंकारं कथङ्कारं इत्थंकारं भुङ्क्ते ।

## स्वाद्वर्थाददीर्घात् ॥ १८७ ॥

स्वाद्वर्थाददीर्घान्तात् व्याप्यात्सरस्मात्तुल्यकर्तृकात्कृगो धातोः संबन्धे रूणम् वा स्यात्। स्वादुङ्कारं मृष्टङ्कारं भुङ्क्ते। पक्षे स्वादुं कृत्वा ( विद्दृग्भ्यः कात्स्न्र्ये णम्*) अतिथिवेदं भोजयति। कन्यादर्शं वरयति।

## व्याप्याच्चेवात् ॥ १८८ ॥

व्याप्यात्कर्तुश्चोपमानात्पराद्धातोस्तस्यैव संबन्धे णम्वा स्यात्। सुवर्णनिधायं निहितः। काकनाशं नष्टः। एवं यावज्जीवमधीते। शुष्कपेषं पिनष्टि।

शक्तौ गम्यायामेतौ निपात्यौ। क्षय्यो व्याधिः। जय्यः शत्रुः। (क्रय्यः क्रयार्थे*) क्रयाय प्रसारितः क्रय्योऽर्थः।

## नाम्नो वदः क्यप् च ॥ २०१ ॥

अनुपसर्गान्नाम्नः पराद्वदेः क्यप्यौ स्याताम्। ब्रह्मोद्यम् ब्रह्मवद्यम्।

## हत्याभूयं भावे ॥ २०२ ॥

अनुपसर्गान्नाम्नः परावेतौ भावे क्यबन्तौ निपात्यौ। ब्रह्महत्या देवभूयंगतः।

## अग्निचित्याखेयमृषोद्ये ॥ २०३ ॥

एते निपात्याः।

## कुप्यभिद्योध्ययसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि ॥ २०४ ॥

एते क्यबन्ताः संज्ञायां निपात्याः।

## दृवृग्स्तुजुषेति शासः ॥ २०५ ॥

एभ्यः क्यप्। आवृत्यः आदृत्यः स्तुत्यः जुष्यः। एतीति इणिकोर्ग्रहणम्। इत्यः अधीत्यः शासः शिष्यः। आशासेस्तु आशास्यम्।

उवर्णादावश्यके ॥ १९४ ॥

अवश्यंभावे द्योत्ये उवर्णान्ताद्धातोर्घ्यण् स्यात्।

कृत्येऽवश्यमो लुक् ॥ १९५ ॥

कृत्यान्ते उत्तरपदेऽवश्यमो लुक् स्यात्। अवश्यलाव्यम् (घ्यण्यावश्यके चजोः कगौ न स्याताम्। अवश्यपाच्यं अवश्यरञ्ज्यम्।

तव्यानीयौ ॥ १९६ ॥

शक्तौ गम्यायामेतौ निपात्यौ। क्षय्यो व्याधिः। जय्यः शत्रुः। (क्रय्यः क्रयार्थे*) क्रयाय प्रसारितः क्रय्योऽर्थः।

## नाम्नो वदः क्यप् च ॥ २०१ ॥

अनुपसर्गान्नाम्नः पराद्वदेः क्यप्यौ स्याताम्। ब्रह्मोद्यम् ब्रह्मवद्यम्।

## हत्याभूयं भावे ॥ २०२ ॥

अनुपसर्गान्नाम्नः परावेतौ भावे क्यबन्तौ निपात्यौ। ब्रह्महत्या देवभूयंगतः।

## अग्निचित्याखेयमृषोद्ये ॥ २०३ ॥

एते निपात्याः।

## कुप्यभिद्योध्ययसिध्यतिष्यपुष्ययुग्याज्यसूर्यं नाम्नि ॥ २०४ ॥

एते क्यबन्ताः संज्ञायां निपात्याः।

## दृवृगृस्तुजुषेति शासः ॥ २०५ ॥

एभ्यः क्यप्। आवृत्यः आदृत्यः स्तुत्यः जुष्यः। एतीति इणिकोर्ग्रहणम्। इत्यः अधीत्यः शासः शिष्यः। आङाशासेस्तु आशास्यम्।

### ऋदुपान्त्यादक्लृपि चृदृचः ॥ २०६ ॥

क्लृप्यादिवर्जादृदुपान्त्यात्क्यप् स्यात् । वृत्यम् । क्लृप्यादिवर्जनात् कल्प्यम् ।

### कृवृषिमृजिशंसिगुहिदुहिजपो वा ॥ २०७ ॥

एभ्यः सप्तभ्यः क्यप् वा स्यात् । कृत्यं कार्यं वृष्यं वर्ष्यं मृज्यं मार्ग्यं शस्यं शंस्यं गुह्यं गोह्यं दुह्यं दोह्यं जप्यं जाप्यम् ।

### शक्ताऽर्हे कृत्याश्च ॥ २०८ ॥

शक्तेऽर्हे च कर्तरि गम्ये धातोः कृत्याः सप्तमी च स्युः । भवता खलु भारो वाह्यः । भवान् हि शक्तः । भवता खलु कन्या वाह्या । भवानेव तदर्हति ।

### व्याप्ये घुरकेलिमकृष्टपच्यम् ॥ २०९ ॥

घुरकेलिमौ प्रत्ययौ कृष्टपच्यशब्दश्च व्याप्ये कर्तरि स्युः । स्वयं भज्यते इति भङ्गुरं काष्ठम् । पचेलिमा माषाः । कृष्टपच्याः शालयः ।

इति श्रीमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां हैमलघुप्रक्रियायां तृतीया वृत्तिः समाप्ता ।

संपूर्णा चेयं प्रक्रिया ।

---

## प्रशस्तिः ।

स्फूर्जद्भूपार्थनिधेर्हैमव्याकरणरत्नकोशस्य ।
अर्गलभिद्रचनेयं कनीयसी कुञ्चिकाद्रियताम् ॥१॥

श्रीहीरविजयसूरेः पट्टे श्रीविजयसेनसूरीशाः ।
तेषां पट्टे संप्रति विजयन्ते विजयदेवसूरीन्द्राः ॥ २ ॥

श्रीविजयसिंहसूरिर्जीयाज्जयवति गुरौ गते स्वर्गे ।
श्रीविजयप्रभसूरिर्युवराजोराजतेऽधुनाविजयी ॥३॥

खेंदुमुनीन्दुमितेऽब्दे विक्रमतो राजधन्यपुरनगरे ।
श्रीहीरविजयसूरेः प्रभावतो गुरुगुरोर्विपुलात् ॥ ४ ॥

श्रीकीर्त्तिविजयवाचक-
शिष्योपाध्यायविनयविजयेन ।
हैमव्याकरणस्य
प्रथितेयं प्रक्रिया जीयात् ॥ ५ ॥ युग्मम्

समाप्तम् ।

## एतत्संसत्प्रकाशितलभ्यसंस्कृतग्रन्थनामानि—

| | | रु. आ पै |
|---|---|---|
| १ | श्रीपरिशिष्टपर्व (स्थविरावलिचरित) | १— ०—० |
| २ | द्वात्रिंशद्द्वात्रिंशिका सटीका | १— ८—० |
| ३ | प्रशमरति सटीका | ०—१२—० |
| ४ | प्रबोधचिन्तामणि (मूलम्) | ०— ८—० |
| ५ | विजयचन्द्रकेवलिचरितम् प्राकृतपद्यबद्ध | ०— ८—० |
| ६ | योगबिन्दु सटीक | ०—१२—० |
| ७ | श्रीवासुपूज्यचरित पद्यबद्धं श्रीवर्धमानसूरिकृतम् | २— ८—० |
| ८ | शान्तिनाथचरित गद्यबद्धम् | १— ०—० |
| ९ | श्रीपार्श्वनाथचरित ,, | १— ८—० |
| १० | पञ्चाशक सटीक | २— ८—० |
| ११ | प्रमेयरत्नकोष (मूलम्) | ०— ४—० |
| १२ | श्रीज्ञानसार (अष्टक) सटीक (प० ग० वि० कृत) | ०—१२—० |
| १३ | श्रीशान्तसुधारस सटीक ,, | ०—१२—० |
| १४ | श्रीअध्यात्मसार सटीक ,, | २— ०—० |
| १५ | पउमचरिय प्राकृतपद्यबद्धं (प्राचीन) | २— ८—० |
| १६ | श्रीउपदेशप्रासाद प्रथमभाग (स्तम्भपञ्च) | १— ८—० |
| १७ | श्रीसूक्ष्मार्थविचारसारोद्धार (सार्धशतक) सटीक. | १— ०—० |
| १८ | श्रीउपदेशमाला योगशास्त्र च (मूल) | ०— ८—० |
| १९ | श्रीजम्बूद्वीपसंग्रहणी सटीका | ०— ४—० |

श्रीजैनधर्मप्रसारक सभा
भावनगर.